श्रीगणेशाय नमः ।

उपाध्यायोपनामकेन्द्रदत्तविरचितः ।

# फक्किकाप्रकाशः ।

सोऽयम्

श्रीकृष्णदासात्मज–गङ्गाविष्णोः

अध्यक्ष " लक्ष्मीवेंकटेश्वर " मुद्रणालये

मैनेजर पं० शिवदुलारे वाजपेयीत्यनेन स्वाम्यर्थं

मुद्रयित्वा प्रकाशितः ।

शकाब्दाः १८३८, संवत् १९७३.

कल्याण–मुंबई.

# प्रस्तावना.

विदांकुर्वन्तु विद्वांसः ! वेदार्थपरिज्ञानैकप्रयोजनस्य समग्रशब्द-शास्त्रस्य पठनपाठनपरिपाटी सर्वतः प्रसिद्धैव । तथाप्यस्मिन् शब्दशास्त्रे विद्यार्थिवटूनां शिक्षासौलभ्यार्थं श्रीमद्भट्टोजिदीक्षितैः सिद्धांतकौमुदीति व्याख्या निरमीयत । अथ चास्या अपि व्याख्यायाः स्पष्टप्रतिपत्त्यर्थमुपाध्यायोपनामकश्रीमदिंद्रदत्तसूरिभि-र्विवक्षितार्थसद्बोधप्रकाशनार्थं " फक्किकाप्रकाशः " इति व्याख्यां विरच्य समुद्भासितं सकलविद्यार्थिजनानां शब्दशास्त्रग्रहणधार-णापटु चेतः ।

आस्तां तावत् । सोऽयं श्रीमान् श्रेष्ठिवर्य-श्रीकृष्णदासात्मज-क्षेमराजैः सकलविद्यार्थिजनानां परोपकाराय कल्याणनगरे " लक्ष्मी-वेंकटेश्वर " मुद्रणालये मुद्रयित्वा प्रकाशितः । इति शम्.

भवदीयनम्रः,

श्रीकृष्णदासात्मज–खेमराजः

# फक्किकाप्रकाशस्थविषयानुक्रमणिका ।



इति विषयानुक्रमणिका समाप्ता ।


पुस्तक मिलनेका ठिकाना–

गंगाविष्णु श्रीकृष्णदास,

' लक्ष्मीवेंकटेश्वर ' छापाखाना,

कल्याण–मुंबई.

श्रीगणेशाय नमः ।

अथ

# फक्किकाप्रकाशः ।



## अथ सञ्ज्ञाप्रकरणम् १ ।

संवास्य मास्यकञ्जालिं हरिं हृदयपङ्कजे । सिद्धान्तकौमुदीगूढफक्किकार्थः प्रकाश्यते ॥ १ ॥ गर्गवंशावतंसो यो वैयाकरणकेसरी । उपाध्यायोपनामेन्द्रदत्तस्तस्यैव सत्कृतिः ॥ २ ॥ एतदेकमाचार्यस्य मङ्गलार्थं मृष्यतां माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि च भवन्त्यायुष्मत्पुरुषकाणि । चाध्येतारश्च वृद्धियुक्ता यथा स्युरिति भाष्यप्रामाण्यान्मङ्गलमारचयति मुनीति । नन्वस्यां पाणिन्युक्तायां चतुर्दशसूत्र्यामक्षरसमाम्नायामाम्नाय इति व्यवहारानुपपत्तिराम्नायसमाम्नायशब्दयोर्वेदे विदितत्वादित्यत आह । माहेश्वराणीति । इमानि महेश्वरादागतानीत्यर्थः । शास्त्रप्रणिनीषुणा पाणिनिना वरिवासितमहेश्वरप्रसादाल्लब्धानीति फलितमेवं चैतादृशानुपूर्विका श्रुतिरेवैषा, एतन्मूलकत्वादस्य व्याकरणस्य वेदाङ्गत्वमुच्यते मुखं व्याकरणमित्यादिना । 'नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् । उद्धर्तुकामः

सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥' येनाक्षरसमाम्नाय- मित्यादिकमप्यत्र मूलम् । 'यद्यपि सोऽयमक्षरसमाम्नायो वर्णसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः सर्ववेदपुराणफलावाप्तिश्चास्य ज्ञाने भवति मातापितरौ चास्य स्वर्गे लोके महीयते' इति भाष्येण । इदं ब्रह्मतत्त्वमेव शब्दरूपतया प्रतिभाति एतत्पठने सर्ववेदाध्ययनकृतस्य पुण्यस्य यत्फलं तत्प्राप्नोतीति माहात्म्यातिशयः शास्त्रस्यैतत्फलाख्यानद्वाराख्यायत इत्यादि कैयटेन चास्याश्चतुर्दशसूत्र्याः फलमुक्तं तथाप्यदृष्टं तत् । अथ किमर्थो वर्णानामुपदेशः, वृत्तिसमवायार्थः, का पुनर्वृत्तिः शास्त्रप्रवृत्तिरिति भाष्येण पाणिनेर्लाघवेन शास्त्रप्रवृत्त्यर्थः स चाणादिप्रत्याहारद्वारेति कैयटेन न दृष्टं प्रत्याहार एव मुख्यं फलमित्याशयेनाह । अणादिसंज्ञार्थानीति । अण् आदिर्येषामिति तद्गुणसंविज्ञानो बहुव्रीहिस्ताश्च ताः संज्ञाश्च ता एवार्थः प्रयोजनं येषां तानि अणादिसंज्ञाभ्य इमानीति वा । संज्ञार्थत्वनिष्पत्तये तत्प्रकारमनुक्रामति एषामिति । चतुर्दशसूत्राणामन्तिमा वर्णा हलन्त्यमिति वक्ष्यमाणसूत्रेणेत्संज्ञाः स्युरित्यर्थः । एतद्वाक्यार्थेनाप्राप्तिराह अकारश्चेति । रप्रत्याहारार्थमनुनासिकत्वेन प्रतिज्ञात उपदेशेऽजित्यनेनेत्संज्ञक इत्यर्थः । ननु हयेत्यादावकारोच्चारणेनाकारविशिष्टस्यैव तत्तत्प्रत्याहारेषु ग्रहणे रामो हिनस्ति स्म रावणमित्यादौ हशिचेत्युत्वादिकं न स्यादत आह हकारादिष्विति । न पुनरन्तरेणाचं व्यंजनस्योच्चारणमपि संभवतीत्युच्चैरुदात्त इति भाष्येण प्राथम्यादकारेणैव हल उच्चारिता नतु तत्राकारो विवक्षित इति भावः ।

हयेत्यादावकारोच्चारणेन तस्य हल्प्रसङ्ग इत्यवतरणं पुनररम्यम् । हकारादिवत् सकृदुच्चारयितव्ये पुनः पुनरुच्चारणेन हल्प्रसङ्गम-ज्ञादित्याहुः । हल्संज्ञायामिति । आभ्यां सूत्राभ्यां हल्मात्रसंज्ञायां सिद्धायामित्यर्थः ॥ सप्तम्यन्तेनेह संज्ञा सूचितेति भावः अयं भावः । न विभक्तावित्यादीनां सार्थक्योपपत्तये हलन्त्यमित्य-स्योपदेशेऽन्त्यं हलित्संज्ञं स्यादिति वाक्यार्थ आवश्यकः सच वाक्यार्थबुद्धौ पदार्थबुद्धिः कारणमिति हल्पदार्थबोधमन्तरा बाधितः हल्पदार्थबोधश्चादिरन्त्येनेत्येतद्वाक्यार्थपरतन्त्र आदि-रन्त्येनेतद्वाक्यार्थबोधं विना बाधितः हल्पदार्थबोधश्च हलन्त्यमि-त्येतद्वाक्यार्थाधीन इति हलन्त्यमादिरन्त्येनेत्यनयोः परस्परापेक्षत्वे-नान्योन्याश्रयदोप आपद्यते तदितरेतराश्रयं भवतीतरेतराश्रयाणि कार्याणि न प्रकल्पन्त इत्युक्तं भाष्ये । अत्र समर्थयन्ते उपदेशे इदन्त्यम्, अच्, अनुनासिक, इति सूत्रत्रयमस्तु उपदेशेऽन्त्यमि-त्स्यादिति प्रथमयोगार्थः, सामर्थ्यादन्त्यमिति न संबध्यते तेन उपदेशेऽजित्संज्ञ इति द्वितीयसूत्रार्थः, अजित्यनुवर्त्तते पूर्वेण सिद्धे नियमार्थस्तृतीयो योगः अचेद्भवति तर्ह्यनुनासिक एवेति तदर्थ-स्तेन रुप्रभृतौ न दोपः, अनुनासिकश्चेद्भवति तर्ह्यच एवेति विपरीतनियमस्तु न भवति मिदचोन्त्यादिति ज्ञापकात् । ननु सूत्र-भेदेऽदृष्टफलहानिः पारायणादौ स्यात् तदुक्तं भाष्ये सिध्यत्येवम-पाणिनीयन्तु भवतीति, नैप दोपः सूत्रभेदं तमुपाचरन्ति यत्र तदेवान्यत्क्रियते भूयो वा यदि तदेवोपसंहृत्य क्रियते नासौ सूत्र-भेद इत्युक्तमत्र उपसर्गात्त इत्यत्र सप्तमे भाष्ये एवं च हल्ग्रहणं

न कर्तव्यमेवमन्योन्याश्रयदोषश्चोद्भूत इत्येके । तदसत् । योगविभागनियमज्ञापकाश्रयणे प्रतिपत्तिगौरवदोषानुद्धारात् । नहि वर्णाभिव्यक्तिजनककण्ठाद्यभिघातगौरवमेवादर्तव्यं न तु ज्ञानजनकमनोव्यापारगौरवमिति राजाज्ञास्ति अपरे तु आदिरन्त्येनेति सूत्रेणापेक्षितेऽज्ज्ञानार्थं हलन्त्यमित्यस्य न वाक्यार्थः कारणं किंतु सह आसमन्ताद्गच्छतीति संहता मध्यमो वर्णः सोऽन्त्येनादिः संज्ञेति तदर्थनादोषादेवं च नान्योन्याश्रय इति तदप्यकिंचित्करम् । अन्योन्याश्रयतत्परिहारादीन्वदता भगवता इटकिटकटीत्यत्र प्रश्लिष्टादीडिण्भ्यां च सहाडश्चपपदे तृजभावबोधनाद्योगमर्यादयोक्तार्थालाभाच्च हयवरेत्यादेरावृत्त्या शषसरेत्यन्तं समुदायमुद्दिश्य हलित्यनेन हल्संज्ञा विधेयातो नान्योन्याश्रय इत्यपि केचित् तदतीव दोषकरम् । दश सूत्रावृत्तौ गौरवतमत्वात् । तस्मादनेकक्लेशकल्पनापेक्षयान्याय्यत्वेनावृत्त्या स दोषः परिह्रियते । पुनरनुक्रमणमावृत्तिरित्यावर्तितस्य हलन्त्यमित्यस्योपदेशेऽजित्यस्मादितमनुवर्त्य चतुर्दशसूत्राणामन्तिमस्य हलित्यस्यान्त्यो लकार इत्संज्ञः स्यादित्यर्थः । न ह्यत्रादिरन्त्येनेत्येतद्वाक्यार्थापेक्षास्ति ततश्चेत्पदार्थज्ञाने आदिरन्त्येनेत्येतद्वाक्यार्थसाम्राज्यमित्येवं परिहृतोऽन्योन्याश्रयः । उपदेश आद्योच्चारणमिति । उपस्याद्यर्थकत्वाद्दिशेरुच्चारणक्रियत्वादिति भाष्याद्युक्तेरिति भावः । आद्यं प्रथममुच्चारणं प्रत्यासत्त्यैतच्छास्त्रप्रवर्तकाचार्याणामेव, आद्यत्वं चाज्ञातस्वस्वरूपज्ञापकत्वमित्यधिकं नागेशीये । ननु शास्त्रेऽनुनासिकोच्चारणाभावात्तत्त्वज्ञानं दुर्लभमत आह प्रतिज्ञेति । प्रति-

ज्ञायते इति प्रतिज्ञा अनुनासिकस्य भाव आनुनासिक्यम् । प्रतिज्ञानुनासिक्यं येषान्ते पाणिनीयाः पाणिनिप्रभृतिप्रोक्ताः वर्णास्ते प्रतिज्ञाविषयानुनासिक्यवन्त इत्यर्थः । प्रतिज्ञा चायमेवमिति वर्णानां तत्वज्ञापकेदितो नुमित्यादि व्यवहारश्चेत्यतस्ताभ्यामनुनासिकत्वज्ञानं सुलभमिति भावः । ये तु पाणिनिशास्त्राध्येतारः प्रतिज्ञानुनासिक्यवन्त इत्याहुस्ते मान्या अनुनासिकधर्मस्य वर्णनिष्ठत्वादिति दिक् । उरण् रपर इत्यत्र लकारग्रहणाय लपरश्चेति वक्ष्यामीति भाष्यकृत्प्रतिज्ञायां कुत्रचिदपि तद्वचनानुल्लेखाद्व्याख्यास्यामीति भाष्यकर्तुराशयमनुरुध्य व्याख्यायां रप्रत्याहारोऽनुक्रान्तस्तुल्यास्यसूत्रे कैयटेन तत्प्रकारमत्राप्याह लण्सूत्रस्थेति । अत्रानुनासिकत्वेन प्रतिज्ञातस्तिष्ठतीति स्थः स चासाववर्णश्च तेनेत्यर्थः । प्रत्याहारस्तु आदिरन्त्येनेत्यनेनेति तद्वाक्यार्थं सूचयति सहेत्यादि । ननु रलयोरिति न्यूनं टकारस्य मध्यगत्वेन रटलानामित्युचितमत आह प्रत्याहारेष्विति । प्रत्याह्रियन्तेऽनेके वर्णाः संक्षिप्यन्ते यत्रेति बाहुलकादधिकरणे घञ् । ननु प्रकृतिप्रत्ययार्थमात्रबोधकत्वरूपया योगशक्त्यकारादिष्वपि दीर्घादीनां संक्षेपात्तेष्वपि तत्संज्ञात्वापत्त्यातिव्याप्तिः मैवम् प्रकृतिप्रत्ययार्थान्वितसमुदायार्थबोधकत्वरूपयोगरूढशक्तेर्विवक्षितत्वेनाणादिष्वेव तत्प्रसक्तेः निर्देशादिति इत्संज्ञकानां ग्रहणे तत्रानुनासिकादौ यणाद्यापत्तिर्दोष इति भावः । न चेत्त्वविधानसामर्थ्यान्न यणिति वाच्यम् । तस्यापि प्रत्याहारेष्वनुबन्धाग्रहणज्ञापनद्वारैव यणभावकल्पकत्वौचित्यात्साक्षाच्छास्त्रबाधकल्पनापेक्षयास्यार्थस्यौचित्यात् ।

आदिना पापाणकेक्कुतिसतेरेकः पूर्वपरयोरित्यादिसंग्रहः । ननु प्रत्याहारेऽनुबंधनां कथमज्ग्रहणेषु नेति भाष्योक्तवार्त्तिके प्रत्याहारशब्दस्याक्षरसमाम्नाये प्रसिद्धेः प्रत्याहारेष्वितामित्यनुपपन्नमत आह आदिरन्त्येनेति । नच वार्त्तिकेऽसंगतिः तात्स्थ्यात्ताच्छब्द्यमित्यभिप्रायात, इत्थं च रप्रत्याहारोपपत्तिः अन्ये तु सति रप्रत्याहारेऽतो लरान्नेतिसूत्रे लकारासंगतिः किञ्च यणृचादितसूत्रेषु बहुष्वर्द्धमात्रालाघवेन यप्रत्याहारेणैव व्यवहारः स्यात् तस्माल्लण्सूत्राकारस्यानुनासिकत्वमप्रामाणिकं ऋलृवर्णयोरितिवल्लग्रहणं कर्त्तव्यमेवोरण्सूत्र इत्याहुः । ननु स्पृष्टप्रयत्नादिभिस्त्रिभिरेव सकलवर्णानां व्याप्तत्वात्संवृतेन कुत्र भाव्यमत आह ह्रस्वस्येति । एवन्तर्हि दण्डानयनमित्यादौ ह्रस्वस्य संवृतस्यानेन विवृतेन दीर्घाकारेण प्रयत्नभेदात्सवर्णदीर्घो न स्यादत आह प्रक्रियादशायामिति । साधनावस्थायामित्यर्थः । विवृतमेवेति । तत्र विवृतत्वं प्रतिज्ञेयमित्यर्थः । एवं चोक्तप्रयोगे सवर्णदीर्घः सिद्ध इति भावः । ह्रस्वस्य प्रयोगे संवृतत्वे सूत्रं प्रमाणयति अअ इति । सुपां सुगिति विभक्त्योर्लुक् आद्यो विवृतः परः संवृतस्तदाह विवृतमनूद्येति । विवृतस्थान इत्यर्थः । अनेनेति । अअ इति सूत्रेणेत्यर्थः । एवं चोभयोरकारयोः प्रयत्नभेदात्सवर्णदीर्घो न । विवृतत्वमस्त्येवेति । तर्हि सवर्णदीर्घस्यादिति चेन्न । पूर्वोक्तार्थज्ञापनार्थं तदभावात् । पर्यवसितार्थमाह । एतेषु परेष्विति । उपलक्षणमिदमेतेषु विद्यमानस्यापि । तेन हकारादिषु दीर्घादिर्नेत्यर्थः । एतेन हरेत्यादिषु चतुर्षु हकाररकारयोः यकारमकारयोश्च सवर्णदीर्घस्य यणादेशस्य चापादयितुं शक्यत्वेन

दधीत्यस्येति व्यर्थमित्यपास्तम् । अन्यथेति । नाज्झलावित्यस्यानारम्भे । अच्त्वं स्यादिति । अच्पदबोध्यत्वं स्यादित्यर्थः । इदं प्रत्याहारवदकेष्वपि वर्णेषु ग्रहणकशास्त्रप्रवृत्तिरिति मते व्यक्तिपक्षे च बोध्यमित्याहुः । अत्रेति । ग्राहकसूत्र एवेत्यर्थः । व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणमिति परिभाषणादिति भावः । एतच्चाणिण्प्रत्याहारः परेण पूर्वेण वेति संदेहोज्जासनाय लण्सूत्रे वर्णान्तरेणानुबन्धे कर्त्तव्ये णकारो ज्ञापयतीति भाष्ये स्पष्टम् । तदर्थस्तु विशेषस्यान्यतराद्यर्थरूपस्य प्रतिपत्तिर्निश्चयो व्याख्यानाच्छिष्टकृताद्यत्संदेहाच्छास्त्रमलक्षणमननुष्ठापकं नहि भवतीत्येवमिण् परेणैवाचिश्नुधातुभ्रुवामिति सूत्रे इण इत्येव सिद्धे य्वोरिति गुरुनिर्देशाच्चेति लणित्यत्र स्पष्टं भाष्ये इति दिक् । नन्वेकारैकारयोः कण्ठतालुस्थानं विवृतश्च प्रयत्नस्तथोकारौकारयोः कण्ठोष्ठस्थानं प्रयत्नश्च विवृत एवेति तुल्यास्येति सूत्रेण परस्परं सावर्ण्यं स्यादत आह सामर्थ्यादिति । नच स्वसत्त्वबोधनार्थं तदारम्भोऽन्यथातयोरसत्त्वं स्यादिति ऋलृक्सूत्रभाष्ये व्यक्तेयं रीतिरिति वाच्यम् । सति तयोः सावर्ण्ये कारेणानुपदिष्टदीर्घादीनामिवैङापि तदुपदेशसंभवात् । ननु एचोयवायावो वृद्धिरादैच् नय्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् इत्यादौ प्रत्याहाराय इति चेन्न, एङो यवायाव इति न्यासे स्थानेऽन्तरतमेनैव निर्वाहाद्वृद्धिरारैङिति पठिते गुणसूत्रे च परस्परसवर्णसंज्ञा वादिमते चतुर्णां ग्रहणसत्त्वेऽप्यदोषात् न य्वाभ्यामित्यत्रैव औ इति स्वरूपेणैव पठनीयत्वात् । एवं चैतदारम्भवैयर्थ्यात्सवर्णाभावज्ञापनं सुस्थम् । यदि तु ' स्वराणामूष्मणां चैव विवृतं करणं

स्मृतम् । तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ।' इति शिक्षोक्तेन विवृततरविवृततमप्रयत्नद्वयेनैङोरैचोश्च भेदः सिद्ध इति मते तदारम्भो न व्यर्थ एवेति बोध्यम् । नापादनीयमिति । तेन ग्लावं ग्लाव इत्यत्रौतोम् शसोरिति न प्रवर्तते इति भावः। ननु विश्वपाभिरित्यादौ तुल्यास्याणुदित्सूत्रयोर्वाक्यार्थबोधोत्तरं निषेधसूत्रप्रवृत्तेर्दीर्घस्याप्यजिभर्हलां सावर्ण्यग्रहणाद्दत्वादेरप्रसक्तिः किञ्च जातिपक्षेऽत्वजात्याक्रान्तदीर्घादेरपि निषेधासिद्धिरिति किमुक्ताकारप्रश्लेषेणानर्थकेनेत्याशङ्क्य निषेधविधेः प्रग्राहकविधेरबोधाद्ध्रस्वस्यैव तेन निषेधविषयत्वादित्यभाष्यादिप्रामाण्येनात्र व्यक्तिपक्षस्यैवालम्बनाच्च प्रश्लेषसाफल्यादित्याशयेनाह यद्यपीति । नाज्झलाविति सूत्रभाष्योक्तवाक्यापरिसमाप्तिन्यायादित्यर्थः । तत्र हि कुमारी शेत इत्युपक्रम्य प्रयत्नभेदेनाज्झलोः सावर्ण्याप्रसङ्गमभिधाय समाधानान्तरमुक्तं वाक्यापरिसमाप्तेर्वा पुनः सिद्धमेतत् किमिदं वाक्यापरिसमाप्तिरिति वर्णानामुपदेशस्तावत् उपदेशोत्तरकालेत्संज्ञा तदुत्तरकाले आदिरन्त्येनेतिप्रत्याहारस्तदुत्तरकाला सवर्णसञ्ज्ञा तदुत्तरकालमणुदिदिति सवर्णग्रहणमित्यनेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णाना ग्रहणं भवति न चात्रेकारः शकारं गृह्णातीति । अयं भावः उपदेशोत्तरं संज्ञाविज्ञानात्प्रत्याहारस्ततः उपजीवकत्वात्सवर्णसंज्ञा । इष्टविषये संज्ञासंज्ञित्वग्रहणं ततो ग्रहणे सिद्धे ग्राहकेणाणुदित्सवर्णस्येत्यनेन प्रसक्ते-

---

१ ननु सूत्रानाज्झलाविति निषेधो यथा न्यायादिनोक्तमयुक्त इकाराकारयो सवर्णेऽप्यग्रहणे प्रसक्ताभावेन दोषाभावात्तत् आह इत्यभाष्ये ते ।

त्रेण यावद्वाक्यार्थबुद्धेरकारादिभिः स्वसवर्णत्वेन ज्ञातानां तावतां ग्रहणं बोधनीयम् । अपरिसमाप्तेरित्यस्य सवर्णसंज्ञाजन्यशक्तिग्रहे नाज्झलावित्येतद्रूपबाधकसंभावनया प्रापिताप्रामाण्यग्रहादणुदिदित्येतद्वाक्यार्थासामार्थ्यादिति । एवं च प्रकल्प्य चापवादविषयमुत्सर्गः प्रवर्तते । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गा भुक्तवन्तं प्रतिब्रूयात् माभुङ्था इत्येतैर्बाधकसंभावनया सवर्णसूत्रवाक्यार्थबोधानुपपत्त्या च विधिनिषेधसूत्रयोरेकवाक्यता कार्या । अज्झल्भिन्नं यत्तुल्यास्यप्रयत्नं तन्मिथः सवर्णमित्युभयविधिबोधितसवर्णसंज्ञोत्तरं ग्राहकसूत्रवाक्यार्थावतारः तथा च निषेधसूत्रेणागृहीतदीर्घादिभिराज्भिर्हलामनिषेधकं पर्यवसन्नमित्याशयेनाहाक्षरेति । अक्षराणां समाम्नाय उपदेशसूत्राणि तत्र भवः बह्वचोऽन्तोदात्तादिति ठञ् । अत एव कुमारी शेते इत्यादौ दीर्घशकारयोः सावर्ण्यात्सवर्णदीर्घत्वं प्राप्तमचीत्यनुवृत्त्या निवार्यत इत्युक्तमत्र च कैयटे वक्ष्यति च मूले । तर्हि विश्वपाभिरित्यादौ का गतिस्तत्राह आकारस्यापि प्रश्लिष्टत्वादिति । तत्र कालसमयवेलास्वित्यादिनिर्देशाल्लिङ्गात् । अपिना दीर्घात्परत्र प्लुतस्यापि प्रश्लेषः तेन हे यियासो इत्यादौ गुरोरनृत इति प्लुतादकारात्परस्य सनः सस्य षत्वं नेति भावः । होढ इतीति । हकारेणाकारग्रहणे सति यद्यत्प्राप्नोति तस्य सर्वस्याप्युपलक्षणमिदम् । भाष्ये प्रयत्नभेदोऽज्झलोरुन्नीतस्तद्यथासिद्धमनच्त्वात्कथमनच्त्वं स्पृष्टं करणं स्पर्शानाम् इषत्स्पृष्टमन्तःस्थानां विवृतमूष्मणाम् ईषदेवात्रानुवर्तते स्वराणां चेत्यत्र विवृतमनुवर्तते

ईपदिति निवृत्तमिति एवं चेदं प्रत्याख्यातमिति कैयटीयाः । अपरे तु प्रयत्नभेदप्राप्तसावर्ण्याभावानुवादकस्यैव बोधकमिदं सूत्रमत एव भाष्ये एतन्न कर्तव्यमिति नोक्तमित्याहुः ॥

इति संज्ञाप्रकरणम् ॥ १ ॥

---

## अथ परिभाषाप्रकरणम् २ ।

नन्विको यणचीत्यादावनिर्धारितषष्ठी विषयषष्ठी स्थाने योगेति परिभाषोपस्थितेरिकः स्थाने इकं विनाश्य यण् स्यादिति सूत्रार्थे न शब्दनित्यताहानिरित्यत आह स्थानं च प्रसङ्ग इति । स्थीयते इति स्थानं भावे ल्युट् दर्भाणां स्थाने शरैः प्रस्तरितव्यमित्यादौ तथार्थदर्शनात् । प्रसङ्गश्च शक्ति संभवेऽर्थवत एवार्थप्रत्याय-नार्थं शब्दप्रयोगात् । एवं चाचपरेकारघटितशब्दस्यार्थबोधनाय प्रसंगे तत्परयकारघटितशब्दः प्रयोक्तव्य इत्यर्थः । पर्यव-सन्नः एरुरित्यस्य तेस्तुरित्यर्थः । एवंरीत्या सर्वत्र शास्त्रे बोध्यम् अर्थत एव स्थान्यादेशभावविश्रान्तेः । तदुक्तम् । 'सर्व सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः । एकदेश-विकारे हि नित्यत्वं नोपपद्यते' इति । ननु सर्वादेशे सुतरां विकार इति चेन्न । अवयविनोऽवयवभङ्गरूपो यो विकारः सर्वादेशे च तदभाव इति तात्पर्यात् । उक्तं च वार्तिककृता । कार्यविप-रिणामाद्वेति । कार्यमिह ज्ञानं योग्यतावलात् । तथा च ज्ञान-निष्ठमुत्पत्त्यादिकं शब्दे आरोप्यते इत्यर्थ इति कैयटादयः । एवं चेकारबुद्धिप्रसङ्गे यकारबुद्धिः कार्येति बुद्धेरेव विपरिणामो न

शब्दादीनाम् । किं च शास्त्रमन्वाख्यायकमेव तदुक्तं भाष्ये नित्ये शब्दार्थसम्बन्धे किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धमिति । असाधुशब्देभ्योऽन्वाख्यानद्वारा साधुशब्दबोधकमिति तात्पर्यार्थः । साधुशब्दोच्चारणे च पुण्योदयः एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवतीति भाष्योक्तेः । नित्याश्च शब्दा नित्येषु कूटस्थैरविचालिभिर्वर्णैरनपायोपजनाविकारिभिरित्यइउण्सूत्रादिषु भाष्ये उक्तमिति विरम्यतेऽस्माभिः । नन्वष्टाभ्य औशित्यत्र जश्शसोरिति स्थानषष्ठीश्रुत्यालोन्त्यपरिभाषोपस्थितेरन्त्यादेशप्राप्तावप्यष्टाभ्य इति पञ्चमीश्रुत्या तस्मादित्युत्तरस्येति परत्वबोधनादादेः परस्येत्यनेनाऽलोन्त्यादेशबाधकेन जश्शसोरादेरकारस्यौशि जायमाने रूपासिद्धिरत आह परत्वादिति। विप्रतिषेधादिति भावः । आदेः परस्येत्यस्यावकाशः द्वीपम् । द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ अनेकाल्शित्यस्य इतः तसिल्प्रत्ययः इदम इश् आदिनातो भिस ऐस् इत्यादिः । परस्येति । बाध्यतेऽनेकाल् इत्यनेनेत्यर्थः अत एव तस्मादित्युत्तरस्येत्यत्र तस्मादित्युत्तरस्यादेरिति लाघवान्न सूत्रितं तथा सति तदेव परत्वादनेकाल्शित्यस्य बाधकं स्यादित्युक्तरूपासिद्धेः । न चानेकाल्शित्यतः प्राक् पठ्यतां तस्मिन्निति निर्दिष्टे तस्मादित्युत्तरस्यादेरिति सूत्रद्वयमिति वाच्यम् । आदेरित्यंशे षष्ठी स्थाने योगेत्यसम्बन्धे आज्जसेरसुगित्यादावप्यादेरिति प्रवृत्त्यापत्तौ देवास इत्यादिरूपासंगतेः । अस्तु षष्ठी स्थान इत्यस्यात्र सम्बन्धः को दोष एवं तर्हि मध्येऽपि तस्मिन्निति तस्मादित्यनयोरपि तत्सम्बन्धे तयोरप्यागम-

विष । प्रवृत्त्यनापत्तेः । न चालोऽन्त्यस्येति सिद्धे ङिच्चेति नियमार्थं ङिदेवानेकालन्त्यस्य स्यान्न त्वङिदपीति-सुत्यजमनेकाल्ग्रहणमिति शङ्क्यम् । तद्ग्रहणाभावेऽतोभिस ऐसित्यादावादेः परस्येत्यस्यैव प्रवृत्त्यापत्तेः । ननु शिद्ग्रहणं व्यर्थम् इदम इशित्यादौ शकारोच्चारणसामर्थ्याद्भूतपूर्वमनेकाल्त्वमादाय सर्वादेशत्वसिद्धेरिति चेत्सत्यम् । नानुबन्धकृतमनेकाल्त्वमिति परिभाषाज्ञापनाय तत्सत्त्वात् । ननु नानेकाल्शिदिति सूत्रमस्तु मास्तु च सर्वस्येतिग्रहणं पूर्वसूत्रविषयान्त्याद्योरादेशनिषेधेन सर्वादेशताया एव पर्यवसन्नत्वादितिचेन्न । अनन्तरस्येति न्यायेनादेः परस्येत्यस्यैव निषेधापत्तेर्दोषात् । यदि तु बाध्यसामान्यपक्षमाश्रित्य सर्वस्यापि बाधकमित्युच्यते तदा दृष्टार्थमेव तद्ग्रहणमित्याहुः ॥

इति परिभाषाप्रकरणम् ॥ २ ॥

## अथ स्वरसंधिः ३ ।

ननु सुध्युपास्य इत्यत्रैकमात्रावच्छिन्नेकारेण द्विमात्रावच्छिन्नेकारोपस्थानाद्यण्सिद्धावपि वध्वीश इत्यादौ ह्रस्वाकारेण दीर्घाकारबोधनात्तदनापत्तिः । उच्चरितः शब्दः प्रत्यायको नानुच्चरित इत्यणुदित् सवर्णस्येत्यत्र भगवदुक्तेः । नैष दोषः । प्रत्याहारेषु तद्वाच्यवाच्ये लक्षणाऽभ्युपगम्यते । तैनेकपदेन वाच्यो ह्रस्वोकारादिस्तेन वाच्योदीर्घोकारादिस्तत्र च लक्षणावृत्तिरिति तदर्थः । नन्वेवं सिद्धेऽणुदित्सवर्णस्येति व्यर्थमिति वाच्यम् । लक्ष्यतावच्छेदकज्ञानार्थमेव तच्चारितार्थ्यात् । नन्वेवं रीत्या नाज्झलावित्यादिविषयेऽपि लक्षणायां

जायमानायां वाक्यापरिसमाप्तिन्यायादिकं विप्रतिपद्येतेति चेन्न । बोधकाले लक्ष्यतावच्छेदकबोधकाणुदित्सवर्णबोध्यसावर्ण्यस्य प्राङ् निवेदनात् । एवं चेक्शब्देन षट्षष्टिर्वर्णा गृह्यन्ते यण्पदेन चत्वारः यणपदे तु न लक्षणा भाव्यमानः सवर्णान्न गृह्णातीति परिभाषया यण-वाच्ययकारादिवाच्यानामभावात् । अतो यथासंख्यसूत्रविषयता-प्यत्र नास्ति । ननु तात्पर्यानुपपत्तिर्हि लक्षणाबीजम् । प्रकृते च ल्वादिभ्य इत्यादि यण्घटितनिर्देशादस्तु लक्षणा सा च शक्यसं-बन्धरूपा शक्तेर्विषयाः शक्याश्चत्वार इको यणश्च चत्वार एवेति शक्यार्थमादाय यथासंख्यमप्यस्तीति चेन्न । एवमपि तृतीयच-तुर्थाभ्यामृकारऌकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ ऌवर्णे रादेशस्य ऋवर्णे लादेशस्य च प्रसंगात् । अत एव भाष्ये स्थानेऽन्तरतम इत्यस्य किमुदाहरणं दध्यत्रेत्युक्तं कैयटे च स्थान्यादेशानां साम्यं नास्त्यतो नास्ति यथासंख्यमित्युक्तं तदेतत्सकलमभिसंधायाह स्थानत आन्तर्यादिति । स्थानेऽन्तरतमसूत्रसंचारेणेत्यर्थः । एतेन स्थानप्रमाणोभयान्तरतमे ह्रस्वेकारे चरितार्थो यण्विधिर्दीर्घे कथं स्यादिति शङ्कापि निर्दलिता स्थानत आन्तर्यस्य सर्वतो बलवत्त्वात् यत्रानेकविधमान्तर्यमिति परिभाषणात् । चतुर्विधमान्तर्यं स्थानार्थ-गुणप्रमाणकृतं स्थानतो दध्यत्र, अर्थतस्तृज्वत्क्रोष्टुः, क्रोष्टुशब्दस्य नपक्तृशब्दादेशः, गुणतो वाग्घरिरित्यादौ इह घोषवतो महाप्राणस्य तादृश एव घः । प्रमाणतस्तु अमुम्, अमू इत्यादौ । अत्रादसोसे-रित्यनेन ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उकारः । इयं च परिभाषा स्थानेऽन्तरतमसूत्रे षष्ठी स्थाने इत्यतः स्थाने ग्रहणेऽनुवर्तमाने पुनः

स्थानेग्रहणं वाक्यभेदमाश्रित्य प्रसंगे सति संभवे स्थानत एवान्तरतम इत्यर्थकम्, तेन निष्पन्नेति भाष्ये स्पष्टम् । त्रिविधापेक्षया स्थानत आन्तर्यस्य बलवत्त्वादेव चेता स्तोतेत्यादौ प्रमाणत आन्तर्येणानकारो नेति दिक् । एवं च स्थानेऽन्तरतमसूत्रेणैवात्र निर्वाह इत्याहुः । भाष्ये तु दीर्घादीनामिक्पदादिभिरुपस्थितये जातिपक्ष एवाश्रितोऽणुदित्सवर्णस्येति सूत्रे, तद्यथा, अण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्सिद्धमेतत् अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं गृहीष्यति तथेवर्णाकृतिस्तथोवर्णाकृतिः, अइउण्सूत्रे भाष्येऽस्य च्वावित्यत्र सवर्णग्रहणं न प्राप्नोति किंकारणमनण्त्वात् न ह्यत्र तेऽणो येऽनुवृत्तौ के तर्हि येऽक्षरसमाम्नाये उपदिश्यंते इत्याशङ्क्य जातिपक्ष एवाश्रितः युक्तश्चायमेव पक्षोऽन्यथा शल्झलादिप्रत्याहारेषु सकलशलादीनां ग्रहणं दुरुपपादं स्यात् । तत्र न लक्षणा लक्ष्यतावच्छेदकाभावादिति दिक् । तथा चेक्पदप्रतिपाद्यत्वादि जात्यवच्छिन्नानां क्रमेण यण्प्रतिपाद्यत्वादि जात्यवच्छिन्ना यकाराद्य इको यणचीत्यनेन विधीयन्ते अत्र पक्षे यथासंख्यसूत्रेण निर्वाहः । तदुक्तं संख्यातानुदेशेनाप्येतत्सिद्धमिति स्थानेऽन्तरतम सूत्रे भाष्ये । न चाभेदका गुणा इति पक्षे यणः । रससेति । यथासंख्यवैषम्यमिति वाच्यम् । अणुदित्सूत्रेऽण्ग्रहणसामर्थ्येन यणंशे गुणभेदका इत्यस्यैव न्याय्यत्वेन भाव्यमानत्वेन च सवर्णानुनासिकानामग्रहणादण्प्रत्याख्यानपक्षेऽप्यारम्भप्रत्याख्यानयोः फलाभेदाय भेदकपक्षस्यैवात्राश्रयणात् । अत एव मतुपोऽनुनासिको वकारो धनवानित्यादौ न । न च स्वोजासित्यत्रानुनासिकोकारस्थाने सानुनासिकवकारः,

न च पाथिमथ्यृभुक्षामादित्यत्राकारप्रश्लेषक्लेश इति वक्ष्यते । ननु भाव्यमानः सवर्णान्न गृह्णातीति परिभाषासत्त्वे पूर्वोक्तानि सिध्यन्तु नाम तज्ज्ञापकं त्वप्रत्ययग्रहणं नञाणप्रत्याख्यानेनैव दूषिताशयमिति चेन्न । प्रत्याख्यानपक्षे तपरसूत्रस्य जातिपक्षप्राप्तसवर्णग्रहणनियमार्थत्ववत् जातिग्रहणप्राप्तसवर्णग्रहणप्रतिषेधायाप्रत्यय इत्यंशः कर्तव्यश्चेत्याशयात् ध्वनितं चेदं ज्यादादीयस इत्यत्र षष्ठे भाष्ये व्यक्तं नागेशीये । अत एव जातिपक्षेऽपि त्यदादीनाम इत्यादौ न दीर्घादिसंग्रहः । ल्वादिभ्य इत्यादिनिर्देशो जातिपक्षाश्रयणे मानम्, तस्माज्जातिपक्ष एव भगवताभिप्रेत इत्याहुः ॥ इकारस्य यकार इति । इकारोच्चारणप्रसंगे यकार उच्चारणीय इत्याशयः । उपपादितश्चायं प्राक् । नन्विह सुधीशब्दस्य ध्यायतेः संप्रसारणे संप्रसारणाच्चेति पूर्वरूपापत्तेर्यण् न स्यात् मैवम् । संप्रसारणपूर्वत्वे समानाङ्गग्रहणमिति वार्तिकोक्तेः। न च न भूसुधियोरिति निषेधः । अङ्गाधिकारस्थितत्वेन प्रत्यये परत एव तेन निषेधात् अनन्तरोक्तयोरनेकाच ओः सुपीत्यनयोः प्रतिषेधाच्च । न चेको सवर्णे इति ह्रस्वप्रसंगो न समासे इति वार्तिकेन निषेधात् । न च नित्यसमासस्यैव तेन निषेध इति वाच्यम् । नित्यग्रहणस्य भाष्ये प्रत्याख्यानादिति संक्षेपः ॥ ननु यद्यपि गव्यमित्यादौ भत्वाल्लोपः शाकल्यस्य हलि सर्वेषामिति वा लोपो न प्राप्नोति तथापि गव्यूतिरित्यत्र स्यादत आह वान्त इत्यत्रेति ॥ तेन च सूत्रे फलाभावो गव्यादौ भत्वेन वारणात् । न च गामिच्छतीत्यादौ फलम् तत्रापि नः क्ये इति नियमेन नान्तस्यैव पदत्वप्रतिपादनेनेतरेषां भत्ववो-

थनादिति वाच्यम् । वान्त इत्यस्य वार्त्तिकेऽनुवृत्त्या श्रूयमाणवान्तादेश इत्यर्थसंपादनफलकत्वात् । ननु विष्णवे इत्यादौ तस्य लोप इति दुर्निवार गव्यूतावुच्चारणस्य चारितार्थ्यादिति चेन्न गवि च युक्त इत्यादिनिर्देशेन तद्वारणात् । ननु लोपो व्योर्वलीति कथं वलोपो नहि कार्यी निमित्ततयाऽऽश्रीयते नहि निमित्तं कार्यत्वेनेति परिभाषया वस्य कार्यित्वेन निमित्तत्वबाधादिति चेन्न । निमित्तस्वानाश्रितविषये कार्यित्वस्य चरितार्थत्वात् । न च लोपो व्योरित्यत्र वकारो भाष्ये प्रत्याख्यातः । प्रत्याख्यानस्य लौकिकोदाहरणाभावपरतया शास्त्रीयप्रयोगार्थं तत्सत्त्वादित्याशयात् । अत एवातो ऌान्तस्येत्यत्र लुप्तनिर्दिष्टो वकार इत्युक्तमिको गुणेति सूत्रे भाष्ये । न तु वान्तग्रहणमेव भाष्ये प्रत्याख्यातं, न च चेयं जेयमित्यादौ यान्तादेशापत्तिः योगविभागात् क्षय्यजय्यावित्येको योगः पूर्वेण प्राप्तेर्नियमार्थः एचश्चेद्यान्तादेशस्तर्हि क्षिज्योरेव ततः शक्यार्थे, क्षिज्योः शक्यार्थ एव तेनाहार्द्यर्थे क्षेयं पापमित्यादौ न दोषः न च क्षिज्योरिति सजातीयापेक्षत्वादेकारांशे नियमेऽप्यैकारांशे नियमाभावाद्रायमिच्छति रैयतीत्यत्र यान्तापत्तिः रायिच्छान्दस इति भाष्योक्तेश्छन्दसि दृष्टानुविधित्वेन रूपान्तरानापादनात् । यादौ प्रत्यये रैशब्दश्छन्दसि वर्तत इति कैयटः एतत्सर्वं स्थानेऽन्तरतमसूत्रे भाष्ये स्पष्टमिति चेत् एवं तर्हि वार्त्तिक एव प्रश्लेष उचित इत्यभिप्रेत्याह छकारादिति । अन्ये तु छान्दसत्वान्न लोपो गव्यूतौ छन्दसि दृष्टानुविधायित्वेन रूपान्तरानापादनात् । अन्यपरिमाणेऽपि संज्ञाशब्दत्वान्न लोपः संज्ञात्वभङ्गापत्तेः। अत एव

रघुनाथशब्दादौ पूर्वपदात्संज्ञायामिति नित्यणत्वाभावः । अत एव भृञोऽसंज्ञायामिति तृतीये भाष्येऽसंज्ञायामभिधेयायामिति नार्थः । किं तर्हि तत्कार्यविशिष्टत्वेन चेत्संज्ञा गम्यते इत्युक्तम् । ननु सर्वादीनीति सूत्रे सर्वनामानीत्यत्र णत्वं प्राप्नोतीत्याशङ्क्य निपातनात् णत्वाभाव इत्युक्तं भाष्ये तत्र तव मते पूर्वोत्तरपक्षयोर्निर्दलत्वापत्तिः संज्ञाशब्दत्वेनैव तदभावादिति चेन्न । आधुनिकविनियोगस्थले शास्त्रानुगतस्यैव विनियोग उचितो न तु शास्त्रविरुद्धस्येत्याशयात् । सर्वनामानीति त्वाधुनिको वियोगः अत एव महत्याः संज्ञायाः करणे एतत्प्रयोजनमित्यग्रिमं भाष्यं संगच्छते अनादिविनियुक्तस्थले तु यथा विनियुक्तानामेव साधुत्वं यथा रघुनाथशब्दादाविति दिक् । नन्वेवमपि मोराजि समः क्वावित्यादीनां वैयर्थ्यापत्तिः सम्राडिति राजविशेषस्य संज्ञात्वेनानुस्वाराभावस्य वक्तुं शक्यत्वादिति चेन्न । तस्य संज्ञात्वस्य प्रामाणिकैरनुक्तेः । संज्ञाया एकनिवेशिनीत्वेन वाक्यार्थे साम्राज्यमित्याद्यभियुक्तप्रयोगानापत्तेश्च । अत एव तत्र संज्ञापदानुपादानाच्च नखमुखात्संज्ञायामित्यादेरपि सामर्थ्यादुक्तार्थे तात्पर्यग्राहकतया वक्तुं शक्यत्वाच्च । अप्रमितस्य तु वकारप्रश्लेषस्योक्तार्थे तात्पर्यग्राहकत्वरूपफलकल्पनस्य निष्फलत्वाच्च । एतेन नखमुखादित्यादेर्वैयर्थ्यादुक्तकल्पना न युक्तेति मन्दोक्तमपास्तम् । वस्तुगत्या शास्त्रव्यापारपूर्वकप्रयोगस्यैवाभ्युदयहेतुनात्रापि तद्व्यापारकल्पनं संज्ञाशब्देऽप्युचितमेवेति मूलाशय इत्याहुः । तन्निमितस्यैवेति किमिति । पूर्वेण सिद्धावस्य नियमार्थत्वेनैव एवकारे लब्धे

तद्ग्रहणस्य स्पष्टतोऽवधारणार्थत्वात्तच्छब्दपरामृष्टयादिप्रत्ययनिमित्तस्यैचश्चेत्तर्हि धातोरेवेति सूत्रार्थवारणाद्वाभ्रव्य इत्यस्योपपत्तावपि लव्यमित्यादेः पूर्वेणैव निष्पत्तेः सूत्रमेव किमर्थम् इति पर्यनुयोक्तुराशयः । उत्तरमाह । ओयत इति । आङ्पूर्वाद्वेञः कर्मणि लटि यजादित्वात्संप्रसारणेऽकृत्सार्वधातुकयोरिति दीर्घे आडा सहाद्गुणे च कृते वान्तादेशापत्तिः । अथ पूर्वं धातुः साधनेन युज्यत इति भाष्यसिद्धान्तपक्षे यदुपसर्गनिमित्तं कार्यमुपसर्गार्थाश्रितं तदन्तरङ्गं विशिष्टोपसर्गनिमित्तत्वात् । यच्च न तथाभूतं तत्र पूर्वागतसाधननिमित्तकमेवान्तरङ्गम् । अत एव प्रेद्ध इत्यत्र गुणो बहिरङ्ग इति न धातुलोपसूत्रे भाष्यकैयटयोरुक्तम् । तथा चात्र धातूपसर्गकार्यस्य गुणस्य बहिरङ्गत्वादन्तरङ्गे वान्तादेशेऽसिद्धत्वान्नोक्तदोषावकाश इत्यपरितोषादाह । ओयतेति । ननु नाजानन्तर्य इति निषेधादस्तु पूर्वोक्तमपि प्रत्युदाहरणमिति चेन्न यत्र कार्यविधावानन्तर्येणाचोराश्रयणं तत्रैव परिभाषोपस्थितेः । यथाक्षद्यूः तत्र हीको यणचीति वचनादिगचोराश्रयणमिह तु न तथेति दिक् । एवं चेदमेव प्रत्युदाहरणम्, अत्रापि वेञः कर्मणि लङि यकि सम्प्रसारणे दीर्घे आटा सहाटश्चेति वृद्धौ वान्तापत्तिः । न ह्यत्र धातूपसर्गकार्यमस्ति येनासिद्धत्वं स्यादिति भावः । लोपः शाकल्यस्येति लोपस्योत्थानप्रसङ्गाल्लोपान्तरस्यो-त्थानेन कार्यप्रसङ्गमाह । कानि सन्तीति । अयं भावः । अस्ति तावात्सिद्धान्तग्रन्थेषु तत्र तत्रोपनिबद्धं पक्षद्वयं पदसंस्कारो वाक्यसंस्कारश्चेति । तत्र परस्परानिरपेक्षाणि पदानि संस्क्रियन्ते साधुत्वे-

नान्वाख्यायन्ते यत्रेति बाहुलकादधिकरणे घञ् । अत एव युष्मद्युपपदे इत्यादीनि निर्वहन्ते । तदुक्तं संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां च यथेष्टमभिसंबंधो भवत्याहर पात्रं पात्रमाहरेति वृद्धिरादैच् सूत्रे भाष्ये । वाक्यसंस्कारस्तु वाक्यात्सुप्तिङन्तचयरूपात्पदादीनि संस्क्रियन्ते यत्रेति तथोक्तः । यद्यपि वाक्यमखंडं निरवयवं तत एवार्थ प्रतीतेर्लोके तस्यैव व्यवहाराच्च तथाप्यन्वाख्यानलाघवाय तत्रावयवं कल्पयित्वा शास्त्रं सफलीक्रियत इत्यन्यत्र विस्तरः । तदप्युक्तम् । वाक्यादुद्धृत्य पदान्याख्यायन्त इति भाष्ये तथा चाद्यपक्षे कानि सन्तीत्यनयोः पार्थक्यनिष्पन्नत्वादचः परस्मिन्नित्यस्य प्रवृत्तेर्न चोद्यावसरः किन्तु वाक्यसंस्कारे कानि सन्तीति वाक्ये प्रक्रियाक्रमेण किम्शब्दोत्तरं जस्तदुत्तरासधातोः झीति किमः कादेशे जसः श्यादेशे नुमि दीर्घे असधातोश्श्नसोरल्लोपे झोऽन्त इत्यन्तादेशे चाचः परस्मिन्नित्यनेन पराझिनिमित्तकाल्लोपः स्थानिवत्स्थानिभूतादकारात्पूर्वत्वेन दृष्टस्य नकारोत्तरीयेकारस्य यण्रूपे विधौ कर्त्तव्ये स्थानिवद्भावादिति कोऽस्यावसरः । नचात्रापि पक्षे विनिगमनाविरहात्तावत्सन्तीति साधयित्वा कानीति निष्पादने दोषाभाव इति वाच्यम् । अन्तरंगबहिरंगयोरन्तरंगं बलवदिति ज्ञापयिष्यमाणपरिभाषयात्र पूर्वोपस्थितनिमित्तत्वरूपमन्तरंगमादायान्तरङ्गाणां प्रथमं प्रवृत्तिरिति कानीत्यस्यैव तावत्साधनीयत्वात् । पदांतविधाविति । पदस्य चरमावयवे विधावित्यर्थः । तन्निषेधादिति । न पदान्तेति सूत्रेण स्थानिवत्त्वनिषेधादित्यर्थः । न च तस्मिन्प्रतिषि-

द्धेऽपि बहिरङ्गपरिभाषया लोपस्यासिद्धत्वेन यणादिकं दुर्वारम् । पदद्वयापेक्षत्वेन यणादेरेव वहिरङ्गत्वात् नाजानन्तर्यें वहिष्ट्वप्रक्लृप्तिरिति निषेधाच्चेति दिक् । ननु रपर इत्युक्ते रप्रत्याहारेण लपरश्चेति वचनेन वा रेफलकारयोर्बाधे ऋकारऌकारयोः प्रमाणत आन्तर्यात्सांकर्यं स्यादत आह । तत्रान्तरतम्यादिति । स्थानत इति भावः रेफशिरस्कस्यारित्यस्य रेफद्वारा ऋकारेण मूर्द्धादिस्थानत्वात् । अयं भावः । उरण्सूत्रे षष्ठीस्थाने स्थानेऽन्तरेति सूत्राभ्यां स्थानेशब्दद्वयमनुवर्त्तते, तत्रैकस्यानुवादेऽपि स्थानसंबंधलाभो द्वितीयस्य लक्षणया प्रसंगावस्थाकालबोधश्च प्रयोजनं तेन गुणवृद्ध्योः प्राप्त्यवस्थायामेवाणोरपराः सम्पन्ना इति प्रमाणतोऽन्तरतमावेडैचौ बाधित्वा स्थानतोऽणेव भवतीति तदाह । कृष्णर्द्धिरित्यत्रारिति । न चैवं कर्त्तेत्यादावनेकालत्वात्सर्वादेशप्रसङ्गः । ऋस्थानित्वमुपजीव्य प्रवृत्तस्य रपरत्वस्य सर्वादेशतानपादानादुपजीव्याविरोधात् । तदुक्तं स्थानेऽन्तरतमसूत्रे वार्तिककृता सर्वादेशप्रसंगस्त्वनेकाल्त्वात् । न चानेकाल्त्वस्य तदाश्रयत्वादादेशेनाविघात इति । न च क्रियते इत्यादौ रिङादिष्वण्रपरः कुतो नेति वाच्यम् । अनादेशत्वात् । आदेशत्वं हि समुदाये विश्रान्तम् । नन्वेवं कृष्णर्द्धिरित्यादौ पूर्वपरसमुदायस्य स्थानित्वेन ऋकारस्यैव स्थानित्वाभावाद्रपरत्वं न स्यादिति चेन्न । पूर्वपरयोरिति द्विवचननिर्देशेन सहितयोरवयवयोरेव स्थानित्वात् । तदुक्तं भाष्ये यो ह्युभयोः स्थाने भवति लभतेऽसावन्यतरो व्यपदेशमिति, अत एव भिन्नादिष्विव द्वयोः स्थानिनो-

द्वावादेशौ माभूतामित्येकग्रहणम् । गुण इत्यादेर्विधेयबोधकत्वेन तत्रैकत्वसंख्याया विवक्षणेनोभयोः पूर्वपरयोरेकतयैव विधेयान्वयेऽनयोः पूलयोः कटं कुर्वित्यादाविवोभयसंबंध्येकाविधेयस्य प्रतीतेरेकग्रहणं स्पष्टार्थमित्यन्यदेतत् । न च सर्वत्र विधावादेशानेव रलपरान्विधायेदं सूत्रं सुत्यजमिति वाच्यम् । आपृच्छ-पृधामीत् भृज्जामिदित्यादौ दोषापत्तिरिति संक्षेपः । परस्मादप्यपवादस्य प्रबलत्वावृद्धिरेव बाधिका तत्रापवादविषयबाध्यविशेषचिन्तापक्षमूलकं न्यायमाह । पुरस्तादिति । पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानिति न्यायः । प्राग्वर्त्तिनोऽपवादा इत्यर्थः । एतत्सर्वमुपपादयिष्यते । एत्येध, एङिपर, ओमाङोरिति पाठक्रमः । अव्यवहितोत्तरवर्त्तिन एङि पररूपस्यैव बाधिका वृद्धिर्नत्वन्तरालवर्तिन ओमाङोरित्यस्य भवति । अपवादस्यावश्यं स्वपरास्मिन्बाधनीये प्रथमोपस्थितानन्तरबाधेनाकाङ्क्षानिवृत्तेश्चारितार्थ्ये पश्चादुपस्थितान्तरालबाधे मानाभावादाकांक्षाशान्तेः सकृदुपस्थितये विप्रतिषेधशास्त्राबाधनेऽपि पुनरुपस्थितये तद्बाधे बीजाभावाच्चेति भावः । असाधुरेवेति वृद्धिप्रयुक्तोऽयं प्रयोगोऽपपाठ इत्यर्थः । आङोरेकादेशस्य पूर्वान्तवद्भावत्वेनाङिविप्रतिषेधसूत्रप्राबल्यादोमाङोश्चेत्यनेनोपैतीत्यत्र लब्धावकाशवृद्धेर्बाधादिति भावः । ननु प्रौढ इत्यत्रेव प्रौढवानित्यत्रापि वृद्धिः प्राप्तेत्यत आह अर्थवदिति । विशिष्टरूपोपादाने । उपस्थितस्यार्थस्य शब्दं प्रति विशेषणतयान्वयसंभवे तत्त्यागे मानाभावोऽस्याः परिभाषाया मूलम् । किञ्च स्वं रूपमिति सूत्रे

स्वंशब्देनात्मीयवाचिनार्थो गृह्यते रूपशब्देन स्वरूपं तेन तदुभयं शब्दस्य संज्ञीति सूत्रार्थः । तत्रार्थो न विशेष्यो अयं शास्त्रीयकार्यासंभवात् किन्तु शब्दस्य विशेषणम् । एवञ्चार्थविशिष्टः शब्दः संज्ञीति फलितं तेनैषा परिभाषा निष्पन्नेति भाष्ये समाख्यातम् । कुत्रचिदर्थस्य शब्दो विशेषणमित्यादिकं संवादचिन्तामणौ व्यक्तम् । प्रकृते चार्थवत्तायाः समुदाये व्यासक्तत्वादूढवत एकदेशस्योढस्याऽनर्थकत्वादवयवस्यार्थवाचकत्वाभावान्नात्र वृद्धेः प्राप्तिरिति भावः । केचित्तु प्रादूहेतिविधेः पदविधित्वेन समर्थः पदविधिरित्यस्यावश्यमुपस्थितौ प्रशब्दद्योत्यार्थान्वितार्थकेषूढादिषु वृद्धौ निर्व्यूढायामुत्तरपदाक्षेपे सति क्तवत्वन्तैकदेशोढशब्दे परे वृद्धेः प्राप्तिरेव नास्तीति नार्थोऽर्थवत्परिभाषासंचारेण संचारितव्यश्चावश्यं पुनः समर्थः पदविधिरुत्तरपदाक्षेपश्चात्र अन्यथोढश्च घटश्चोढघटौ प्रकृष्टावूढघटौ प्रोढघटावित्यत्र ऊढशब्दस्य द्वंद्वेन सह सामर्थ्ये तदवयवेन सह सामर्थ्यस्य निष्प्रत्यूहत्वात् ऊढस्य शक्यार्थवत्त्वाच्च । अथवा सत्यप्युत्तरपदाक्षेपे यदि कस्यचित्प्रोढ इति क्रियते तदा तस्मिन्नुत्तरपदे प्रोढ इत्यत्रातिप्रसंगवारणाय प्रसिद्धचप्रसिद्धिनिबन्धनो गौणमुख्यन्यायोऽनुसरणीयः स चार्थवत्परिभाषाप्रवृत्त्यधीन इत्यभिप्रायकस्तत्संचारोऽस्त्वित्याहुः । ननु रपरश्रुतेरन्यत्र चरितार्थत्वादुपाच्छतीत्यादावेकादेशस्थले विसर्गः स्यादत आह । अन्तवद्भावेनेति । मानमाह । निर्देशादिति । न च कर्त्तरि चर्षीत्यादौ गुणस्य पदद्वयगतवर्णद्वयापेक्षत्वेन बहिरंगसिद्धत्वाद्रेफाभावान्न विसर्ग इति वाच्यम् ।

गुणस्येव विसर्गस्यापि रेफपकारात्मकवर्णद्वयाश्रितत्वेन बहिरंगत्वात् । परनिमित्तकत्वं तूभयोः समम् । उरण्रपर इत्यत्र भाष्ये तु रेफस्य पूर्वान्तवत्त्वे विसर्जनीयप्रतिषेधो वक्तव्यो नार्कलिपनाकुटाद्यर्थमित्यपूर्ववचनमेवारब्धमिति दिक् । उपसर्गेणैवेति । विना यस्यानुपपत्तिः स तेनाक्षिप्यते यथाकृतिः पदार्थ इति दर्शने घटमानयेत्युक्तं जातेरमूर्तत्वादानयनानुपपत्त्या जातिर्व्यक्तिमाक्षिपति । तथोपसर्गसंज्ञायाः क्रियामन्तरानुपपन्नत्वादुपसर्गः क्रियामाक्षेपयति । सा च धात्वर्थस्तस्य चाक्षेपासंभवात्तद्वाचिन आक्षेपः फलतीत्यभिप्रेत्याह । धातोरिति । पुनर्वृद्धीति । तत्सामर्थ्याद्वृद्धिरेव न कदापि तदभाव इति फलितार्थः । ननूपसर्गेणाक्षिप्तेऽपि तस्मिन्प्रगत ऋद्धः प्रर्द्ध इत्यादौ प्रस्योपसर्गत्वादृद्धस्य ऋकारादिधातुप्रभवत्वाच्च वृद्धेः प्राप्तौ तन्निवारणायोपसर्गताप्रयोजकधातुत्वलाभार्थं धातुग्रहणमस्तु कथमन्यार्थतेति चेन्न, यत्क्रियायुक्ताः । प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञे भवत इत्युपसर्गात्सुनोतीत्यत्राष्टमे भाष्योक्त्यैव समाधानात् । ज्ञापितश्चायमर्थः उपसर्गाः क्रियायोग इति सूत्रस्थयोगग्रहणेन, अन्यथा तृतीयांतेन सप्तम्यन्तेन वा क्रियापदेन तदर्थं सिद्धे तद्वैयर्थ्यमेव । पाक्षिकोऽपीति । ऋत्यक इत्यस्य विकल्पप्राप्तिकत्वात्तदभावे यथाश्रुतेनैव सिद्धेर्योगविभागस्य पाक्षिकानिष्टवृद्ध्यभाववारणफलकत्वादिति भावः । ननु न माङ्योग इत्यत्र भाष्येऽटश्चेति सूत्रयित्वाऽस्वपो हसनित्यत्र वृद्धिमाशंक्य धाताविव्यपकृष्य समाहितत्वेन धाताविल्यस्य चारितार्थ्याद्योगविभागे मानाभाव इति चेन्न

पूर्वत्र कर्तव्ये अत्र करणात् । अत एव धातावित्युभयोः शेष इत्युक्तं भाष्यकृता, केचित्त्वाक्षिप्तेनैव सिद्धेऽतिरिच्यमानधातुपदेनोपसर्गाव-यवाकाराद्धात्ववयवऋकारे परे तयोः पूर्वपरयोर्वृद्धिरेवेत्युचितार्थः संपद्यते, तथा चैवं रीत्या पाक्षिकप्रकृतिभाववारणे सिद्धे नार्थो गौरव-ग्रस्तेन योगविभागेनेत्याहुः । ननु सूत्रे उपसर्गपदं विसृज्य गते-रिति कुतो नोक्तं लाघवान्मैवम् । अच्छर्छतीत्यादौ वृद्ध्यापत्तेः अच्छगत्यर्थवदेष्विति गतिसंज्ञात्वात् । वाक्यभेदेनेति । एकवाक्यत्वे हि प्रजेत इत्याद्यसङ्गत्यापत्तेरिति भावः । सुब्धाताविति । सुबन्त-प्रकृतिके धातावगादौ पररूपं वा स्यात्तदभावे उत्सर्गसूत्रेण वृद्धिरिति द्वितीयवाक्यार्थः । अत्र वदन्ति । एङचेडिति सूत्रयितव्ये परग्र-हणमुत्तरार्थम् । रूपग्रहणं तु स्पष्टार्थम् । अमि पूर्व इति वदेटि पर इत्येव सिद्धेरिति । अचि किमिति । अज्झलोः सावर्ण्यनिषेधादकः सवर्णेऽग्वेव भविष्यतीति प्रश्नः । अनिष्पत्तेरिति । नाज्झलाविति सूत्रविषयनिर्णयेऽपवादविषयपरिहारेण तत्तद्वर्णीयसवर्णपदवाच्य-त्वनिर्णयोत्तरं तावता ग्रहणस्य ग्रहणकशास्त्रेण बोध्यतया निषेध-बोधकाले ग्रहणकशास्त्रस्य तावद्ग्रहणबोधकत्वासिद्धिरित्यर्थः । अत्र वक्तव्यमुक्तं प्राङ् न विस्मरणीयम् । अकोकि दीर्घ इत्येव सुव-चमिति । दध्यत्रेत्यादौ यथासङ्ख्यविज्ञानेनातिप्रसङ्गभङ्गाद्धोतॢकार इत्यत्रापि ऋकारॢकारयोः सावर्ण्यादुपपत्तेरोकारएकारयोः सति सावर्ण्येऽचीत्यनुवृत्तिमन्तरापीष्टसिद्धिर्लाघवाच्चेत्याशयः । ननु यथा न्यासे सूत्रान्तःकोऽग्निविष्टसवर्णपदमग्रिमवार्तिकद्वयेऽनुवर्त्यमेवं सति तत्रैव तत्करणे विपरीतगौरवापत्तिरिति चेन्न । वचनद्वयविधेयमत्र

रुवर्ण इत्यनेनैव निष्पाद्य तस्य तुल्यास्यसूत्रे भाष्यकृता प्रत्याख्यानात् तथा अक इति सूत्रेणैव ऋकारद्वयस्यस्थाने रेफद्वयवत्तारूपगुणान्तर्येण कदाचिद्रेफद्वयगर्भस्य विवृतत्वान्तर्येण कदाचिद्विवृतस्य लृकारे लकारवृत्तान्तर्येण कदाचिद्धि लकारस्य कदाचिद्विवृतत्वसाम्येन रेफवता साम्येन च तादृशस्य ऋकारस्य सिद्ध्या विकल्पफलासिद्धेः कैयटे च स्पष्टतरामिदम् । ननु गोअग्रमित्यादाविव पक्षे प्रकृतिभावो दुर्वार अत आह। व्यवस्थितविभाषयेति । विगतावस्था विकल्परूपा जातास्यां सा चासौ विभाषा च तया नैमित्तिकप्रवृत्त्येत्यर्थः । विभाषारूपे विकल्पे विधिनिषेधरूपांशद्वयं सामान्येनोपस्थितमत्र विशेषविधिरूपा व्यवस्थिता क्वचित्तु निषेधरूपा व्यवस्थिता, तथा च मूले वक्ष्यति क्वचिन्न पापेऽभिनिवेश इत्यादि। गवाक्ष इति। गवां किरणानामक्षीवेत्यक्षतोऽदर्शनादित्यच् पुंस्त्वं लोकात् वातायनेऽयं रूढः नन्वेवंरीत्या गवेन्द्र इति सिद्धे इन्द्रे चेति व्यर्थं मैवम्। भाष्योक्तातिरिक्तव्यवस्थितविभाषाणामप्रामाणिकत्वज्ञापनार्थं तत्सत्त्वात्। अग्नीत्प्रेषणे परस्य चेति सूत्रेणाग्नीदग्नीन्विहरेत्यत्र प्राप्तप्लुतत्वव्यावृत्त्यर्थं तत्र बहुलग्रहणस्य वार्तिककृताकृतस्य प्रत्याख्यानाय विभाषापृष्टप्रतिवचने हेरिति सूत्रे विभाषेति योगविभागं कुर्वता भाष्यकृतैतस्या विभाषायाः व्यवस्थितविभाषात्वध्वननात्। देवत्रातो गलेग्राह इति योगे च सद्विधिः। मिथस्तेन विभाष्यन्ते गवाक्षः शंसितव्रतमिति शाच्छोरिति सूत्रे भाष्ये स्पष्टम्। कृतेऽवङि सन्निपातपरिभाषाया अनित्यत्वात्सवर्णदीर्घ इति केचित्। विभाषानुवृत्तेः स्फोटायनपदम-

दृष्टार्थम् । आगीति सूत्रयितव्ये अवङ्ग्रहणमदृष्टार्थमेवेत्याहुः । नित्यग्रहणं किमिति । यद्यपि प्लुतप्रगृह्या इति सूत्रान्तःकोटिनिविष्टप्लुतादिज्ञानात् तत्तत्संज्ञाबोधकसूत्रपाठानन्तरं प्लुतेति सूत्रे पठितव्ये तदुल्लेखनेन प्राचीनपठितेऽन्द्रे च नित्यमितिन्यासे नित्यमित्यस्य प्रामादिकत्वकथनान्नित्यमित्यत्यस्यानुवृत्त्यभावस्तथापि विकल्पानिवृत्त्यर्थं नित्यत्वलाभो भवित्यतीति प्रकृतिभावः मा भूदिति । हरी ईशावित्यत्र प्लुतप्रगृह्या इति सावकाशम् । चक्रि अत्रत्यादाविको सवर्ण इति लब्धावसरम् । हरी एतावित्यादौ विप्रतिषेधेन परत्वाद्ध्रस्वसमुचित एव स्यादिति विकल्पो दोषः । नित्यग्रहणेन तु सामर्थ्यात्परमपि बाध्यत इति भावः । न च प्रकृतिभावे कर्तव्ये प्लुतस्यासिद्धत्वं शंक्यम् । प्लुतमनूद्य प्रकृतिभावविधानसामर्थ्यात् । नन्वचीत्यनुवृत्तेऽज्ग्रहणं सूत्रे सुत्यजम् । सामर्थ्यात्प्रत्यासत्त्या यस्मिन्नचि प्रकृतिभावस्तदज्निमित्तकार्यस्यैव तेनाभाव इत्यर्थसंपादनेन जानु उ अस्य रुजतीत्युञः प्रगृह्यत्वेऽपि जानू अस्येति सवर्णदीर्घरूपसंधिफलकत्वान्न दोषः । ह्रस्वविधानसामर्थ्यादेवेति । चकारेण प्रकृत्यनुष्यते इति भाष्यम चकारखंडनपरभाष्यस्यायं भावः तेन प्रकृतिभावानुकर्षणेऽपि चानुकृष्टं नोत्तरत्रेति परिभाषया चकारेणानुकृष्टत्वेन प्रकृतिभावस्य ऋत्यक इत्यत्र संबन्धाभावेन तद्वाक्यार्थासामञ्जस्येन तदर्थं ह्रस्वविधानसामर्थ्यस्यावश्यकत्वाच्चकारो व्यर्थ इति । उक्तपरिभाषाया ज्ञापकं तु स्वादुमि णमुलित्यतो णमुलनुवर्तमानेऽव्यये यथाभिप्रेताख्याने कृञः क्त्वाणमुलाविति सूत्रे णमुल्ग्रहणम् । अन्यथा क्त्वा चेति वदेत् । तद्धि उत्तरत्र तिर्यन्य-

पवर्ग इत्यादिसूत्रेषु उभयोः संबंधार्थम् । अत एव वदः सुपि क्यप् चेति सूत्रे चानुकृष्टस्याचो यदित्यतो यतो भुवो भावे इत्यत्र नानुवृत्तिः लुटि च क्लृप इत्यत्र सर्वे चकाराः प्रत्याख्यायन्त इति भाष्येण विरुद्धेयम् । व्याख्यानादेवानुवृत्तिनिवृत्त्योर्निर्वाह इति तदाशय इति दिक् । भाष्ये स्थितमिति । प्रकृतसूत्रे पूर्वोक्तो भावः स्थित इत्यर्थः । ननु ह्रस्वाभावे प्रकृतिभावार्थं चकारोऽस्तु तेन चक्री अत्र चक्रि अत्र चक्र्यत्रेति रूपत्रयसिद्धिरिति चेन्न । समुच्चयार्थकत्वे उक्तभाष्यविरोधात् । त्वदुदितरूपस्य संहिताया अविवक्षयैव सिद्धेश्चेत्यलं भाष्यविरुद्धकल्पनया । चक्र्यत्रेत्यत्र स्कोरिति कलोपो न स्थानिवद्भावात् । पूर्वत्रासिद्धे न स्थानिवदित्यपि न वाच्यम् । तस्य दोषः संयोगादिलोपलत्वण-त्वेष्विति निषेधस्य वक्ष्यमाणत्वात् । नन्वको सवर्ण इति सूत्रमस्तु मास्तु ऋत्यक इति पृथक् सूत्रमिति चेन्न । सवर्णार्थमनिगर्थं च तस्य पृथक्करणात् होतृऋकारो ब्रह्मऋषिरित्यादावित्याहुः । वार्त्तिकमिति । अप्लुत इत्युक्तेऽपि प्लुत इत्यस्याध्याहारे विधायकमे-वास्तु सूत्रं लाघवमप्यस्तीति प्रश्नः । सत्यमित्याह । प्लुत एव निषिध्येतेति । प्लुतस्य स्थानेऽप्लुतविधानेन विजातीयत्वविरोधेन प्लुतो निवर्तेतेति भावः । एवञ्च सत्यन्यत्र दोषः स्यादित्याह । प्रगृह्याश्रयेति । एतमग्नी इति वाक्यैकदेशमग्नी इत्यनुकृष्य दूराद्धूत इति प्लुते एकसंज्ञाधिकाराभावादीदूदेद्द्विवचनमिति प्रगृह्यत्वं प्लुतप्रगृह्या इति प्रकृतिभावे सति प्लुतस्यासिद्धत्वाद्दीर्घत्वबुद्धि-वत्तद्गतं प्रगृह्यत्वं प्रकृतिवदनुकरणमिति वक्ष्यमाणातिदेशादनुकरणे

सुलभमनुकार्यं त्वन्यथैवेति सिद्धान्ते प्लुतोऽपि श्रूयते अयं भावः । वतिप्रत्यय सादृश्यार्थक॰ । सादृश्यं च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । यथा चन्द्रवन्मुखमित्यादौ मुखचन्द्रयोर्भिन्नत्वे चन्द्रगताह्लादकत्वं मुखे तथा प्लुतोऽप्लुतवदित्युक्ते तयोर्भिन्नत्वेऽप्लुतगतं संध्यादिरूपकार्यं प्लुतेऽतिदिश्यते न तु प्लुतनिवृत्तिः क्रियतेऽतिदेशाना स्वभावात् अत एवोक्तमप्लुतकार्यं यणादिकं करोतीति मूले । अतिदेशाभावे विधायकत्वे स्वीकृते तु प्लुतस्य निवृत्तिः स्यादिति । अत्र भेदघटितसादृश्यं प्राचामनुरोधेन व्याख्यातं मतभेदेऽपि सादृश्यं भवतीति चिन्तामणौ नागेशीये च निरूपितम् । न चाग्नी इतीत्यादौ प्रगृह्याश्रयप्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावे यणादिकं स्यादिति वाच्यम् । इति शब्दसापेक्षाप्लुतवद्भावापेक्षया वर्णमात्रापेक्षप्रकृतिभावस्यान्तरङ्गत्वात् । मात्रिकमिति । एवं सति गौरवमिति प्रश्नः अमुकेऽनेति । अदसशब्दात्कृताकचो जसि त्यदाद्यत्वे मुत्वेजसश्श्यादेशे आद्गुणः । असतीति । अयं भावः । ईदूदेदिति सूत्रादीदूतावेवानुवर्तते । एकदेशे स्वरितत्वप्रतिज्ञानात् तत्रोकारानुवृत्तिः क्लीबस्थौलिङ्गयोरमू आसाते इत्यत्र नपुंसकाच्च औङ आप इति सूत्राभ्यामौकारस्य श्यादेश आद्गुणे एकारान्तत्वात्पूर्वसूत्रेण सिद्धेर्व्यर्था । तथापि पुंसि मकारात्परौकारान्तस्य संभवात्पूर्वेणाप्राप्ते सति सफला । अत एव मूले रामकृष्णावित्युक्तम् । अदसो मादिति सूत्रं माति मुत्वं मीत्वं नासिद्धम् आरम्भसामर्थ्यात् एवञ्चादसो मात्परस्यैकारासंभवादेकारो ना-

नुवर्त्तते तस्मादेकारानुवृतितात्पर्यग्रहफलकमेवमाद्ग्रहणम् । अर्थ-ग्रहणं किमिति । तदभावे ईदूदेद्द्विवचनमितिवदीदूदन्ताया तप्त-मीत्यर्थापत्तावेकादेशस्य परादिवद्भावेन सप्तमीत्वाश्रयो आस इत्यादावेव स्यान्नतु गौरी अधिश्रित इत्यादौ सप्तम्या लुकापहारात् अत्रापि सवर्णदीर्घ एकादेश इत्युक्तौ तु परत्वादाङ्गत्वादेकादेशं बाधित्वा ङेराम् आण् नद्या इत्याद् च स्यादिति तु न वाच्यम् । ईदूतौ सप्तमी प्रगृह्यम् । अदसः एच्च द्विवचनमित्येवं सूत्रयितव्ये गौरवग्रस्तन्यासकरणेन तत्तत्प्रकरणापेक्षयाऽस्य वैजात्यबोधना-दूकारांशे त्वदुक्तार्थासंभवाद्यप्यादेरनभिधानाच्च । सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति ज्ञापयिष्यमाणपरिभाषाया इहाप्रवृत्तिस्तदन्तग्रहणे सतीदूदंतं सप्तम्यंतं प्रगृह्यसंज्ञमित्यर्थ-संपत्तौ सकललक्ष्यानिर्वाहेनार्थोऽर्थग्रहणेनेति पर्यनुयोक्तुराशयः अत्र समाधत्ते । वृत्ताविति । कृत्तद्धितसमाससनाद्यंतधातुरूपाया-मित्यर्थः । अर्थान्तरेति । अवयवार्थान्वितसमुदायार्थोपसर्जन इत्यर्थः । उपसंक्रमश्च तदालिंगितस्यैव स्वार्थस्योपस्थितिः । तत्र समासवृत्तिमुदाहरति । वाप्यश्व इति । संज्ञायामिति समासः । सुप्सुपेति वा, अयं भावः वृत्तौ तावदेकार्थीभावः स्वीकृतः । समर्थः पदविधिरिति सूत्रात् स च विशिष्टविषयकशक्त्यै-कोपस्थितिजनकत्वम् राजपुरुष इति वाक्ये पृथगर्थानि पदानि राजपुरुष इति वृत्तावेकार्थानीति समर्थसूत्रभाष्यात् । अन्य एवावयवार्थान्वितः समुदायार्थः प्रादुर्भवति तदपेक्षैकार्थीभाव इति कैयटाच्च संसृष्टं समर्थमितिभाष्याच्च लभ्यते । एवञ्च वाप्यश्व

इत्यादाववयवार्थान्वितसमुदायेन वाप्याधिकरणकद्रव्यरूपोऽर्थ उचित इति अतिरिच्यमानेनार्थग्रहणेन तु सामर्थ्यादाधेयासंसृष्टाधारबोधकत्वरूपं समभिव्याहृतपदान्तरार्थानन्वयित्वेनोपस्थितिविषयत्वरूपं वा सप्तम्यर्थपर्यवसन्नत्वं बोध्यते । वाप्यश्व इत्यत्राधेयमश्वरूपं द्रव्यं तत्र संसृष्ट एवाधारः सप्तम्यर्थः । एकार्थीभावस्योक्तत्वाादिति न भवति प्रगृह्यसंज्ञा सोमो गौरी अधिश्रितः । इत्यदौ सोमादिराधेयस्तत्रासंसृष्ट एवाधिकरणरूपः सप्तम्यर्थ इति सञ्ज्ञा भवति । ननु गौरीपदबोध्याधिकरणत्वस्याधिश्रयणक्रियाया विशेषणतयान्वयः कारकाणां क्रियायामन्वयसिद्धान्तात्तत्कुतो नाधेयसंसृष्ट आधार इति चेन्न । यस्यावयवार्थस्य समुदायार्थमन्तरा नोपस्थितिस्तस्यैवानोक्तलक्षणकोटिप्रविष्ट एकार्थीभावविषयत्वात् । इह तु अवयवार्थस्य पार्थक्येनाप्युपस्थितिरिति दोषाभावात् तदुक्तमेव भाष्ये, अर्थग्रहणे क्रियमाणे कस्मादेवात्र न भवति वाप्यामश्वो वाप्यश्व इति जहत्स्वार्था वृत्तिरिति । अथाजहत्स्वार्थाया दोष एव, अजहत्स्वार्थायामपि न दोषः । समुदायार्थोऽभिधीयत इति अत्र कैयटः । अस्त्येवात्र सप्तम्यर्थ इति प्रश्नाभिप्रायः । जहत्स्वार्थेति । समासस्यैवार्थवत्त्वात्पूर्वोत्तरपदयोर्वर्णवदानर्थक्यात्सप्तम्यर्थोऽत्र नास्तीत्यर्थः । समुदायार्थ इति । वृत्तौ हि पूर्वपदं स्वार्थमभिधत्ते प्रधानार्थमपीति स्वार्थसंसृष्टस्य प्रधानार्थस्याभिधानात्पाशूद‍्वत्स्वार्थस्य विवेकानवगमात्समुदायार्थो वृत्तौ संसृष्टरूप एवाभिधीयते सप्तम्यर्थग्रहणेन यावत्स्वार्थे

तस्तस्यैव ग्रहणमिति समासेन भवति प्रगृह्यसंज्ञेति व्याख्यानात् । तत्र वर्णवदानर्थक्यादिति कैयटस्य सञ्ज्ञायामिति समासे रूढि शब्दावयवार्थप्रतीतेरित्यर्थः । अन्यथा सर्वसमासे पूर्वोत्तरपदयोरानर्थक्येऽवयवार्थान्वितेत्याद्युक्तकैयटेन पूर्वापरविरोधः स्यात् अत्राहुः जहत्स्वार्थापदेनैकार्थीभावः पदे वर्णवद्वृत्तिपदानामानर्थक्यमिति तदर्थः । अजहत्स्वार्थापदेन व्यपेक्षेति भूषणकृत्प्रभृतयः । तन्न । एकार्थीभावमुपक्रम्य जहत्स्वार्थाऽजहत्स्वार्था वेति समर्थसूत्रभाष्योक्तेरेकार्थीभावे एव पक्षद्वयलाभात् तत्रोपसर्जनपदस्यार्थत्यागो न वेति भाष्याशयः । जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनीति वृद्धोक्तेश्च सर्वथार्थत्यागे पूर्वोक्तकैयटविरोधाच्च महाबाहुरित्यादौ महतोऽनर्थकत्वादान्महत इत्यात्वानापत्तेश्च तस्माद्वृत्तावयवार्थान्वितसमुदायार्थ इति सिद्धमधिकं संवादचिन्तामणाववसेयम् ॥

इति स्वरसंधिः ॥ ३ ॥

---

## अथ व्यंजनसंधिः ४ ।

टोः किमिति । अस्ति तावत्परिभाषा एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति तत्र वाशब्द एवकारार्थे परस्परान्वितपदार्थकपदानां सहैव प्रवृत्तिनिवृत्ती इति तदर्थः । एवञ्चैतत्प्राग्वर्ति ष्टुना ष्टुरित्यस्मात्ष्टुनेत्यनुवर्त्य पदान्तादिति सामानाधिकरण्येन पञ्चमी कल्प्यते ततश्च पदान्तात्सकारटवर्गात्स्तोः ष्टुर्न स्यादित्यर्थसंपत्तेः सर्पिष्टमामित्यादौ ष्टुत्वप्रतिषेधप्राप्तावपि ह्रस्वात्तादौ तद्धिते इत्यनेन जातस्य षस्य झलाञ्जशोन्ते इति जश्त्वस्यैव विधानान्न

काप्यनुपपत्तिरिति प्रश्नः । उत्तरयति । सर्पिष्टममिति । जश्त्वस्यैव पत्वस्यासिद्धत्वात् जश्त्वाप्रवृत्तेरुक्तरीत्या ष्टुत्वनिषेधापत्तौ रूपासिद्धेः । यदि तु एकयोगनिर्दिष्टानामेकदेशो ऽप्यनुवर्तत इति परिभाषान्तरम् । एकदेशे स्वरितत्वप्रतिज्ञानलभ्यमिदम् । एकत्रार्थे योगः सम्बन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरिति तदर्थ इति पक्षान्तरमिति सूत्रे पञ्चमे कैयटः अत एवालुगुत्तरपदे इत्येकयोगनिर्दिष्टत्वेऽपि अलुगधिकारः प्रागानङः उत्तरपदाधिकारस्तु प्रागङ्गाधिकारादिति सङ्गच्छते । किञ्च दामहायनान्ताचेत्यत्र संख्यादेरित्यनुवर्तते अव्ययादेरिति निवृत्तमित्युपपद्यते । स्पष्टञ्चेद दामहायनेति सूत्रे चतुर्थे भाष्ये । एवञ्च ष्टुनेत्येकदेशस्य टोरेवानुवृत्तिः । किञ्च ष्टुनेत्यसमस्तमेव ततोऽपि टोरेवानुवृत्तिः तस्मात्पदान्ताट्टवर्गादित्येवार्थः सम्पन्नः सर्पिष्टममित्यादौ दोषाभाव इत्युच्यते । तदा टोर्ग्रहणमदृष्टार्थफलकमेवेत्याहुः । स्थानप्रयत्नाभ्यामिति । अयं भावः । स्थानेऽन्तरतम उरण्रपर इति संहितया सूत्रकृतानुरान्ते ससम्यन्तः प्रथमान्तो वेति विचारः । तत्राद्यपक्षे षष्ठीत्यनुवर्तते । अन्तरतमो य आदेशस्य स्थानी तत्रैव षष्ठी उपसंहर्तव्या तत्रैव षष्ठी तत्रादेश इति सूत्रार्थेन प्रकृतिर्नियम्यते तथा च वान्तो यीति यच इत्यनुवृत्त्यापि आदेशस्य वान्तरस्यान्तरतमस्थानिनि ओ औ स्थाने षष्ठी उपसंहृतेति तत्रैवादेशः न तु सपूर्णस्यैव । अन्त्यपक्षे तु आदेशोऽन्तरतमो भवतीति सूत्रार्थनादेशो नियम्यते इत्यादेशनियमपक्षे सपूर्णस्यैव वान्तापत्तिदोषात्ससम्यन्तपाठ एव युक्तः । प्रकृतेऽप्यनुनासिकस्यादेशस्यान्तरतमे

स्थानिनि सति षष्ठ्या उपसंहाराद्रेफस्यानुनासिकणकारप्राप्तिरिति तां मत्वा वारयति, रेफेन प्रवर्तत इति । जातिपक्षे लक्ष्यत्वजातेरैक्याच्चरितार्थ्याद्विधेरिति भावः । व्यक्तिपक्षे तु लक्ष्यभेदो लक्षणभेदादस्यां व्यक्तौ लक्षणस्याचारितार्थ्याद्रेफेऽपि प्रवृत्तिर्दुर्वारैवेति लक्ष्यानुरोधाज्जातिपक्ष एवाश्रितः । व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थस्यैतद्व्यक्तिविषयतयोपप्लव एव नेति दोषाभाव इत्याहुः । इत्थं सप्तम्यन्तच्छेदपक्षे प्राप्तौ समाधानं परन्तु स पक्षो भाष्ये दूषित एव । तद्यथा । इको यणचीति यण् ह्रस्वानामेव स्यादत्र पक्षे न तु दीर्घाणाम् । आदेशस्यार्द्धमात्रिकस्य यणोऽन्तरतमः स्थानी सन्निकृष्टत्वान्मात्रिको ह्रस्व एवेति तत्रैव षष्ठ्या उपसंहारात् वान्तो यीत्यत्रोक्तो दोषो वान्तग्रहणदूषणेनैवोद्धृतः । दूषणप्रकारश्चोक्तः प्राङ् न विस्मर्तव्यः । तस्मादनुस्वारस्येति सूत्रात्सवर्णग्रहणमपकृष्य परस्सवर्णोऽनुनासिको भवतीति सूत्रार्थो रचनीयः । एवञ्च यरन्तर्गतरेफस्य सवर्णाभावान्न प्रकृतानुपपत्तिः तदुक्तं रेफेऽनुनासिकपरसवर्णत्वयोः प्रतिषेधो वक्तव्यो न वक्तव्यः रेफोष्मणां सवर्णा न सन्तीति हयवरट्सूत्रे भाष्ये । ननु सवर्णाभावेऽपि रेफ एवानुनासिकोऽस्तु मैवम् उक्तसूत्रार्थादिति दिक् । दकारनिपातनादिति । तत्र प्रकृतिप्रत्ययसमुदायस्य पाठादिति मतेनेति भावः । केचित्तु यचि भं तसौ मत्वर्थे इति संहितापाठे तकारात्पूर्वत्र दकारप्रश्लेषेण भत्वान्नानुनासिकः द्विवचनं तु दतयोस्समाहारद्वंद्वोत्तरं सकारेण सहेतरेतरयोगादिति न युक्तम् अल्पाच्तरत्वात्सस्य पूर्वनिपातापत्तेः । किंतु तसयोर्द्वंद्वोत्तरं दकारेणेतरेतरयो-

गादिति । न चानुनासिकप्रवृत्तौ झषन्तत्वाभावेन झष इति वकाराभावाद्रणे पाठानर्थक्यादेव समाधेयम् । अनुनासिकविधेरासिद्धत्वेन झय्त्वानपायादित्याहुः । यस्यासिद्धत्वादिति । त्रिपाद्यां परत्वादित्याशयः । एतच्च पाणिन्यनुक्रान्तपाठरीत्या भाष्यकृत्संमते । अनुस्वारस्य ययि, वापदा, तोर्लि, उदःस्था, झयो हो, शश्छोटीति पट्सूत्र्युत्तरं झलां जश्, अभ्यासे चर्च, खरि च, वावसाने, अणोऽप्रगृह्यस्येति पाठे यस्यासिद्धत्वाभावेन चर्त्वं भवत्येव । अत एव प्रकृतसूत्रे भाष्ये उदः पूर्वत्वे स्कन्देश्छन्दस्युपसंख्यानम् । उत्कन्दो रोग इत्युक्तम् । ननूत्थानमित्यादौ झलो झलीति सलोपे चर्त्वे चोपपत्तिरितीदं सूत्रमेव निष्प्रयोजनमिति चेन्न सामर्थ्यादनेन झलादौ प्रत्यये लोप इति तदर्थस्य ज्ञापनात् उदस्थादित्यत्र तु निर्दिश्यमानपरिभाषया निर्दिश्यमानादेरेव स्थानिवत्त्वान्न दोष इत्याहुः । संस्कर्तेति । सम्परिभ्यामिति करोतेस्सुट् ननु लोपपक्षे एव द्वित्वेन द्विसकारस्य सिद्धत्वात् समस्सुटीति व्यर्थमत आह । त्रिसकारमपीति । स्कोरिति लोपस्तु न अभ्यासिद्धत्वात् । ननु पुनर्द्वित्वे त्रिसकारसिद्धिर्मैवम्, लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः तेन समः सुटीति सूत्रे वेति पाठेनैव पक्षे मोऽनुस्वारेण सिद्धेरनुनासिकात्पर इति सूत्रं व्यर्थमित्युक्तिर्निरस्ता । नन्वनुस्वारस्यानच्त्वात्कथं द्वित्वमत आह अनुस्वारस्येति । अयोगवाहानामट्सूपसंख्यानं शर्षु चेति हयवरट्सूत्रे भाष्योक्तिरिति भावः । अकारोपरीति । इकाराद्युपरिपाठे तु पयस्सु इत्यादाविणः ष इत्यादिषत्वादेरापत्तिरिति भाष्याशयः । न चाच्त्वे दर्गि स्मरेत् रामः पातु हरिः

करोतीत्यादौ यणादिप्रसङ्गः त्रिपादीत्वे विसर्गादीनामसिद्धत्वात् । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेराह वचनान्तरेणेति । अचो रहाभ्यामिति यणो मय इत्यनेनेति भावः । अथोणादयोऽव्युत्पन्नानि व्युत्पन्नानि च प्रातिपदिकानीति तत्र तत्र भाष्योक्तेराह व्युत्पत्तिपक्ष इति । पूर्वोड्डुमुस्तुनिति व्युत्पादितस्य पुंसः संयोगान्तलोपे विशिष्टभागस्येदमनुकरणं पुम इति । पर्युदासादिति । इदुदुपधस्येति सूत्रेऽप्रत्ययस्येत्यस्य प्रत्ययावयवभिन्नस्येत्यर्थादिति भावः । अव्युत्पत्तीति । तत्पक्षे प्रकृतिप्रत्ययविभागाभावादिति भावः । अयं चातः कृकमीति सिद्धे कंसग्रहणेन ज्ञाप्यत इति कैयटः । ननु कथमेतत्पक्षोपपत्तिः शास्त्रव्युत्पादनाभावात्तत्प्रयोगाणामधर्मजनकत्वेन हेयत्वात् तदुक्तं शास्त्रपूर्वके प्रयोगे धर्मोऽन्यदा त्वधर्म इति भाष्ये मैवम् । अबुधबोधनाय व्युत्पाद्यमाना अपि उणादयो व्युत्पत्तिनिमित्तं कार्यं न लभन्त इत्यादेशप्रत्यययोरित्यत्राष्टमे कैयटोक्तरीत्याशयेन तथा व्यवहारात् रूढिशब्द इव तत्राप्यवयवसाजात्येन व्युत्पादनात् अन्याचार्याभिप्रायेणैतत्पक्षस्य भाष्योक्तावपि पाणिनेर्व्युत्पत्तिपक्षस्यैवायनेति सूत्रादौ भाष्ये सिद्धान्तितत्वाच्चेत्यप्यन्ये । षत्वप्राप्ताविति । एतच्चानुनासिकपक्षे ज्ञेयम् अनुस्वारविधानेनेदुदुपधत्वाभावात् ᳲक ᳲ पयोरेव प्राप्तिः कुप्वोरित्यस्यापवादकत्वं तत्फलं चाह । येन नेति । येन नाप्राप्तो यो विधिरारभ्यते स तस्य बाधको भवतीति हि न्यायः येनेति कर्तरि तृतीयाप्राप्तेरिति भावे क्तः नञ्द्वयं प्रकृत्यर्थदार्ढ्यबोधकम् । तेन यत्कर्तृकावश्यप्राप्तावित्यर्थः तदप्राप्तियोग्यविषयेऽचारितार्थ्यं बाधकत्वे बीजम् तदुक्तं शपूर्वाः

खय इत्यत्र भाष्ये। शर्पूर्वा इत्येतद्धलादिः शेषस्य बाधकम् । कथं विषयभेदे बाधकत्वम् इदं तावदयं प्रष्टव्यः यदि तन्नोच्येत किमिह स्यात् हलादिः शेषश्चेन्नाप्राप्ते तस्मिन्नारंभादिदं बाधकं भविष्यतीति अपवादे वृत्रहन्शब्दे निरूपयिष्यमाणा बाध्यसामान्यचिंता बाध्यविशेषचिंता पक्षौ तौ च लक्ष्यानुरोधाद्व्यवस्थितौ तत्र बाध्यविशेषचिंतापक्षप्रवृत्त्याह न तु शर्परे इत्यस्येति । ननु विसर्जनीयस्य सोऽशर्परे इत्येव सूच्यताम् अशर्परे इति बहुव्रीहिणा पर्युदासेन च व्यवहितादपि खरवसानयोरिति सूत्रात्खरीत्यनुवृत्तिः सुकरा वा शरीति सत्वविकल्पात् पक्षे विसर्गश्रुत्या सहितरूपसिद्धिः । कुत्वोरित्यत्र शर्परे इत्यनुवृत्त्यापि दोषाभावः । एवञ्च वासः क्षौममित्यादौ कुप्वोरित्यस्यैवाप्रवृत्तिरिति चेन्न । एवं सति सूत्रे विसर्गाभावे कुप्वोरित्येतद्विषये चकाराद्विसर्गलाभानापत्तेः । ननु वा शरि कुप्वोरित्यस्यैवाप्रवृत्तिरिति ≍क≍पौ विसर्जनीय इत्यपि न्यासोऽस्तु-मेवम् विषयविभागस्य दुर्विज्ञेयत्वापत्तेः बहुलावृत्त्याभावात्प्रतिपत्तिगौरवाच्च । ननु शर्परे इत्येतद्विहितविसर्गस्य ≍क≍पौ दुर्निवारौ । किञ्च एतद्विसर्गस्यैव तौ स्याताम् । खरवसानयोरिति जातस्य त्वेतयोरसिद्धत्वात् सत्वमेव स्यादेवञ्च वासः क्षौममित्यादावसंगतिरिति चेन्न । शर्परे विसर्जनीय इति सूत्रं कुप्वोरित्यत्रानुवर्त्य शर्परयोः कुप्वोः ≍क≍पयोरपवादो विसर्गस्य विसर्गो भवतीति पृथक् वाक्यार्थेन व्याख्याने दोषाभावादिति भाष्ये स्पष्टम् । जश्त्वेन द इति । स्वशब्दे उपपदे छो छदने इत्यस्मात्प्रत्ययेऽन्तर्वर्तिविभक्त्या स्वशब्दस्य पदत्वादाद्यन्तौ टकिताविति तुकोऽपि तदव-

न्यवत्त्वेन पदांतत्वाज्झलाञ्जश इति प्रवृत्तेरिति भावः । ननु दीर्घादिति पंचमी श्रवणाच्छे इति सप्तमीश्रुत्या पंचम्या षष्ठीप्रकल्पनेन छस्य तुकि छकारो पदिप्रकृतिचकारश्रवणापत्तेरित्याशयेनाह । दीर्घस्यायमिति ज्ञापकाद्व्याख्यानाद्वा दीर्घादिति षष्ठ्यर्थे पञ्चमीति भावः । इदमेओङ्सूत्रे भाष्येऽपि ध्वनितम् । चेच्छिद्यते इति । छे चेति सूत्रेऽकार उच्चारणार्थो न तु विवक्षित इत्याशयः । नन्वत्र तुको हलादिशेषोऽस्तु नैवम् । अभ्याससंज्ञाप्रवृत्तिकाले स्थानिद्वारा साक्षाद्वा सन्निहितानां हलामेव तेन निवृत्तिकरणात् । अत एव नुगतोऽनुनासिकस्येत्यादि चरितार्थम् ॥

इति हल्सन्धिः ।

---

## अथ विसर्गसन्धिः ।

मातुः' कार्यमित्यादावपि दोषाभावाद्भाष्ये मूले च ज्ञापनं तत्फलं चासंगतमिति तु न वाच्यम् । अत्र प्रत्ययत्वाभावात् । तद्यथा मातृ-शब्दान्ङस्ॠत उदित्युत्वे रपरत्वे रात्सस्येति लोपे रेफस्य विसर्गे तत्र सकारसन्निधावकारे नास्ति प्रत्ययत्वम् । प्रत्ययसंज्ञायां समुदायनिवेशिनीत्वादिति तदादेशस्योरः प्रत्ययत्वाभावेन विसर्गस्य प्रत्ययसम्बधित्वाभावः यस्तु उत्वे कृतेऽविशिष्टस्सकारः प्रत्यय-संज्ञकः स लुप्त एवेति कैयटः । न चान्तादिवच्चेत्यस्य पूर्वपरस्य समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रत्ययत्वादयस्ते एकादेशविशिष्टस्यापीत्यर्थादुरसित्यत्र प्रत्ययत्वस्य सुलभत्वादेकदेशविकृतमनन्यवदिति न्यायेनोर इत्यस्य प्रत्ययतया न दोष इति वाच्यम् । त्रिपाद्या असिद्धत्वेन तत्रान्तादिवच्चेत्य-स्याप्रवृत्तेः । स्थानिवद्भावेनापि न प्रत्ययत्वम् । उपात्तस्थानिनोऽ-कारस्य प्रत्ययत्वाभावात् । प्रत्ययसम्बन्धित्वमपि न स्थानिवद्भा-वलभ्यम् । अशास्त्रीयत्वादिति दिक् । एतदुक्तं मातुः करोति । अप्रत्ययस्येति षत्वं प्रसज्येत अप्रत्ययविसर्जनीयस्येत्युच्यते प्रत्ययविसर्जनीयश्चायम् । लुप्यतेऽत्र प्रत्ययो रात्सस्येति प्रकृ-तोरण्रपरसूत्रयोर्भाष्ये । एवञ्चात्र प्रत्ययाभिन्नविसर्जनीयत्वात्षत्वं स्यादिति सकलमभिसंधायाह । एकादेशेति । तदुक्तम् एवं तर्हि भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात्षत्वप्रतिषेधस्य, कथं कृत्वा ज्ञापकं यदयं कस्कादिषु भ्रातुष्पुत्रशब्दं पठति तज्ज्ञा-पयत्याचार्य एकादेशनिमित्तात्षत्वं न भवतीति तत्रैव भाष्ये । ॠत उदित्येकादेशविधायकं शास्त्रं तन्नियमत्तं प्रयोजकं यस्य

विसर्गस्येत्यर्थः विसर्गस्यैकादेशशास्त्रनिमित्तकं तु एकादेशशास्त्र-संपन्नरेफस्थानिकत्वाद्बोद्धव्यम् । पाठादिति । न च षत्वतुकोरसिद्ध इति सूत्रेणैकादेशशास्त्रस्यासिद्धत्वात्षत्वाप्राप्तौ तत्र पाठो विध्यर्थ एवास्तु कथं ज्ञापनायेति वाच्यम् । षत्वे तु किं च कर्त्तव्ये पदान्तपदाद्योरेवैकादेशोऽसिद्ध इति भाष्यसंमतार्थेन कोसिचदित्यादावेकादेशस्यासिद्धत्वादिति कैयटादयः ननूक्तज्ञापकान्मातुः कृपेत्यादाविव शकान् ह्वयन्तीत्यत्रादेच उपदेश इत्यात्वे क्विपि संप्रसारणे संप्रसरणाच्चेत्येकादेशे हल इति दीर्घे शकहूष्वित्यत्रापि षत्वं न स्यादिति चेन्नैवम् तुल्यजातीयकत्वात् कश्च तुल्यजातीयः कुप्वोरिति दिक् । हयवरट्सूत्रे भाष्ये तूपधाग्रहणं न करिष्यते इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्याम इति प्रत्याख्यातं सूत्रस्थमुपधाग्रहणमित्यन्यदेतत् । यद्यपि द्वित्रिभ्यां सुजन्ताभ्यां चतुश्शब्दस्यापि सुजन्तत्वे लब्धे कृत्वोर्थग्रहणं साहचर्यं न व्यवस्थापकं सर्वत्रेत्यर्थज्ञापनार्थम् । तेन दीधीवेवीटामित्यत्रागमस्येटो ग्रहणं न तु धातोरिति ज्ञापनफलं दर्शितं तथापि प्रकृते किमिति पृच्छति । कृत्वोर्थे किमिति नन्वस्त्वेवं कृत्वोर्थ इत्यनेनैव कृत्वोर्थे वर्त्तमानस्येदुदुपधस्य पदस्य यो विसर्गस्तस्य षत्वं वेति सूत्रार्थे दशकृत्वः करोतीत्यादौ नातिव्याप्तिर्न वा चतुष्करोतीत्यादावव्याप्तिरिति द्विस्त्रिश्चतुरिति न कर्त्तव्यमिति चेन्न । कृत्वोर्थे इत्यस्येदुदुपधस्येति सूत्रं प्रत्यासिद्धेश्चतुश्शब्दे नित्यषत्वापत्तेः । ननु प्रकरणे प्रकरणमसिद्धं न तु योगे योगः । तदुक्तमुपसर्गादसमासेऽपि णोपदेशस्येत्यत्राष्टमे भाष्ये । समासे पूर्वपदादिनियमान्न

प्राप्नोति । असिद्धमुपसर्गाण्णत्वं तस्यासिद्धत्वान्नियमो न भवि-ष्यति एवं तर्हि सिद्धे सति यदग्रामग्रहणं करोति तज्ज्ञापयत्या-चार्यः न योगो योगे सिद्धः किं तर्हि प्रकरणे प्रकरणमसिद्धमिति । एवं च तद्ग्रहणं व्यर्थमेवेति चेन्न । रषाभ्यामित्यत्र समानपदं समानमेव यन्नित्यं पदं तदाश्रीयते इति समासेनास्य प्रवृत्ति-रिति पूर्वपदात्संज्ञायामग इत्यस्य विध्यर्थत्वेन समासग्रहणस्य ज्ञापकत्वानुपपत्तिरिति कैयटेन तत्पक्षस्य दूषितत्वात्पूर्वत्रासिद्ध-मित्यत्र पूर्वपदेन प्रकरणग्रहणे व्यवहितप्रकरण एव त्रिपाद्या असिद्धत्वं स्यादिति दोषादस्याधिकारत्वे प्रतियोगमुपस्थित्या प्रतिसूत्रमसिद्धत्वस्य दुर्वारत्वाच्च । ननु सुच इत्येवास्तु सूत्रम् । पदस्येत्यधिकारात् सुजन्तपदावयवविसर्गस्येत्यर्थसंभवेन द्विष्क-रोतीत्यादेर्निष्प्रत्यूहत्वात् । न च परमद्विष्करोतीत्यादौ षत्वा-नापत्तिः । प्रत्ययग्रहणपरिभाषया ज्ञापयिष्यमाणयाऽवयवस्य सुजन्तत्वेऽपि उत्तरपदत्वे चापदादिविधाविति निषेधेनापदत्वादिति वाच्यम् । अनुत्तरपदस्थस्येति निषेधेन क्वचिदुपात्तविशेष्यासत्त्वेऽपि शब्दरूपविशेष्यमादाय तदन्तविधिरिति ज्ञापनेन शब्दरूपविशेष्य-मादाय प्रत्ययग्रहणपरिभाषया लब्धतदन्तार्थकस्य पदविशेषणतया सुजन्तान्तस्येत्यर्थेनादोषात् । एवमेव वनोर्चेत्यादेरर्थ इति दिक् । तस्मात्सुच इत्येव सूत्रयितुमुचितमिति प्राहुः । चतुष्कपाल इति ।' चतुर्षु कपालेषु संस्कृत इत्यर्थे संस्कृतंभक्षा इत्यनेन जातस्याणो द्विगोर्लुगनपत्ये इति लुक् । चतुश्शब्दस्याव्यु-त्पन्नत्वादिदुदुपधस्येति नित्यं षः । अत एव चतुष्पाद्भ्यो

ढजित्यादिनिर्देशसंगतिः । न च हयवरट्सूत्रभाष्ये इदुदुपधस्य सस्य यो विसर्ग इति सूत्रार्थकथनेन कथमत्र प्रवृत्तिः । विसर्गस्य पाठाभावेनोपधात्वासंभवात्तत्स्थानिनिमित्तमुपधात्वं ग्राह्यमिति भाष्यकर्तुराशयात् । अत एवाष्टमे समःसुटीतिसूत्रे संपुंकानामिति वार्त्तिकेन रुविधानमेवास्त्वित्याशंक्य नैवं शंक्यं पुंस्कामेत्यत्रेदुदुपधस्येति षत्वं प्राप्नोतीत्युक्तं संगच्छते । नन्विह सामर्थ्यपदस्यैकार्थीभावपरत्वात्तदेव युक्तं तथा च सर्पिष्करोतीत्यादौ प्रवृत्तेरभावात्सूत्राप्रवृत्ताविदुदुपधस्येति नित्यषत्वप्राप्तिरत आह । इह व्यपेक्षेति । इहैवेत्यर्थः । अत एवोत्तरसूत्रे भाष्ये पूर्वयोगे अपेक्षासामर्थ्यम् । न चात्र व्यपेक्षासामर्थ्यमित्युक्तम् । अयं भावः । इहैकार्थीभावसामर्थ्यग्रहणे परमसर्पिः कुण्डिकेत्यादावेकार्थीभावरूपसमासेऽप्येतत्प्रवृत्त्या विकल्पापत्तिः । उत्तरसूत्रान्तःकोटावनुत्तरपदस्थेत्यनया नित्यं समास इति कोटेर्व्युदासादिति । सामर्थ्यं किमिति । नन्वेतदभावे प्रतियोगित्वेनैकार्थीभावपर्यवसाने तत्र चोक्तदोषसद्भावात्प्रश्नानुपपत्तिः । न

नायं किंशब्दोऽत्र पृच्छायां क तर्हि जिज्ञासायां व्यपेक्षापदेन कीदृशोऽर्थो विवक्षित इति तात्पर्यम् । प्रत्युदाहरणमुखेन ज्ञापयति । तिष्ठतु सर्पिरिति । तत्र परस्पराकांक्षारूपोऽर्थ इति नात्र प्रवृत्तिरिति भावः । विभक्तेः क्रियामन्तरानुत्पादादेकक्रियान्वयेऽन्यत्रापेक्षाभावादित्यर्थः । वैपरीत्येनान्वये त्विष्टमेवेति बोध्यमिति दिक् । अनुत्तरपदस्थस्येति किमिति । इतिशब्दोऽप्यर्थे समाप्त्यर्थे वा इति शब्दापाठे तु अवयवद्वारा समुदायस्य संग्रहः । उभयत्रापि सूत्रे किमर्थमिति प्रश्नः । भाष्ये तु वसिष्ठसूत्रवैयर्थ्यादेराशङ्कनात् तदयथा । किमर्थं तर्हीदमुच्यते । प्रतिषेधार्थस्तु यत्नोऽयमनुत्तरपदस्थस्येति इदं व्याचष्ट कैयटः । इसुसोस्सामर्थ्ये इत्यत्र व्यपेक्षालक्षणसामर्थ्यग्रहणात् । समासे इदुदुपधस्येति नित्यं षत्वं सिद्धं तत्किमर्थमिदं सूत्रमिति प्रश्नाशयः । उत्तरपदस्थस्य समासे षत्वनिवृत्त्यर्थं सूत्रमित्यर्थ इति तदेव समाधत्ते । परमसर्पिरिति । नित्यग्रहणन्तु न कर्त्तव्यं समासे इदुदुपधस्येति नित्यं षत्वसिद्धेरिति कैयटः । नित्यं समासे इत्यनेन निषेधाप्तेर्वैयर्थ्यमाशंक्याह । कस्कादिष्विति । ननु तत्र पाठसामर्थ्यादुत्तरपदस्थस्यापि षत्वमस्तु कथमन्यार्थतेति चेन्न । अनुत्तरपदस्थस्येति ग्रहणस्य तज्ज्ञापकभाष्यस्य चासंगत्यापत्तेः । असमासे व्यपेक्षाविरहेऽपीति । तिष्ठतु सर्पिष्कुंडिकामानयेत्यादौ नित्यसमासे इसुसोरित्यनयोरप्रवृत्तेः षत्वं न स्यादिति भावः । व्यपेक्षायामिति । सुंदरं सर्पिष्कुण्डिकाया इत्यादौ इसुसोरिति विकल्पापत्तिरिति भावः ॥

इति विसर्गसन्धिः ।

# अथ स्वादिसंधिः ।

ननु यत्वस्यासिद्धत्वादुत्वे कृतेऽपि तस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यादित्यत आह । यत्वस्यापवाद इति । ननु पूर्वत्रासिद्धत्वेनोत्वे कर्तव्ये रुत्वमसिद्धमत आह । न भवतीति । आश्रयासिद्धेरित्याह । सामर्थ्यादिति । ननु रोः सुपीत्यस्यानन्तरम् अत उरतीत्येवास्तु सूत्रं मैवम् । उत्वस्यासिद्धत्वेनाद्गुणप्रवृत्त्यनापत्तेरित्याहुः । अशि किमिति । असति रिक्ते चादेशेऽपि भो भगो खरवसानयोरुभयो- स्त्रिपादीस्थत्वेऽपि पूर्वम्प्रति परस्यासिद्धत्वाद्विसर्गविधिं प्रति यत्व- विधेरसिद्धत्वाद्विसर्गस्यैव लाभान्न कुत्राप्यनिष्टमापद्येतेति नार्थोऽश्- ग्रहणेनेति पर्यनुयोक्तुराशयः । सत्यमिति तदाशयमनूद्य समा- धत्ते । यद्यपीत्यादिना । स्थानिवद्भावेनेति न चातिदेशं प्रति वि- सर्गविधेरसिद्धत्वं शंक्यम् । नमुने इत्यत्र नेतियोगविभागेन प्रत्ययः परश्चेति निर्देशैश्च क्वचित्त्रिपादी पूर्वं प्रति नासिद्धेति ज्ञापनात् । ननु रोरुकारस्यानुबंधत्वाद्रेफमात्रं विसर्गस्य स्थानी- त्यल्विधित्वेन स्थानिवद्भावो न स्यादित्यत आह । न ह्ययम- ल्विधिरिति । व्याख्यानात्समुदायस्योकारविशिष्टरेफस्य स्वीकारादि- ति भावः । यथाऽग्रहइस्इइति स्थिते ग्रहो लिटि दीर्घ इत्यनेना- कारस्य दीर्घे तस्य स्थानिवद्भावेनेटमाश्रित्येट ईटीति सिज्लोपः क्रियते । तदुक्तं भाष्ये विशिष्टो ह्लोपोऽनल्माश्रयते इटन्नामेति तस्मादत्र स्थानिवद्भावेन रुत्वाद्यत्वं स्यादित्यश्ग्रहणं स्थितम् । ननु ग्रहो लिटीत्यत्र दीर्घस्य स्थानिवत्त्वेनेट एव निर्देशो न त्वच इट इति श्रुत्याचश्चेत्यस्याप्रवृत्तेः अनियमे नियमकारिणी परि-

भाषेति न्यायादिति कैयटः । इट इटीत्यत्रापीट्त्वेनैव निवेश इति बाढमनलाश्रयणं तत्र भाष्यकर्तुः । इह तु विसर्गे रेफस्यैव स्थानिवत्त्वेन वैषम्यान्न मवद्वचनं दृष्टान्ततामभिप्रैति । अनल्विधावित्यस्य च स्थान्यल्वृत्तिधर्माश्रये स्थान्यलसम्बन्धाल्वृत्तिधर्माश्रये च स्थानिवद्भावो न भवतीति भाष्यसम्मतार्थः । प्रकृते च स्थान्यल्रेफवृत्तिरुत्वं स्थानिवद्भावेन दुर्लभमल्विधित्वात् । तस्माद्यत्र विसर्गस्य स्थानी समुदितो रुस्सम्भवति तादृशमुदाहार्यम् यथा यशःसु पयःसु इत्यादौ । इह रोः सुपीत्यनेन रोम्समुदायस्य विसर्गविधानेन रुवृत्तिरुत्वस्याल्विधित्वाभावेन स्थानिवत्त्वालाभेन यत्वं स्यादित्यश्ग्रहणमिति चेत्सत्यम् । रोस्सुपीत्यत्रापि रोरीत्यतो रेफस्यानुवर्त्तनाद्रेफस्यैव विसर्गविधानेनाल्विधित्वादुक्तोदाहरणे समत्वात् । न तूत्तरार्थम् । तदुक्तं भो भगो इत्यत्राष्टमे भाष्ये उत्तरार्थन्तर्हि अश्ग्रहणं कर्त्तव्यम् । हलि सर्वेषां हल्यशीति यथा स्यात् इह मा भूत् वृक्षवयतेरप्रत्ययः वृक्षव्करोतीति चेन्न । न पदान्ता हलोऽणः सन्तीति लण्सूत्रभाष्येण सह विरोधात् । किञ्च वृक्षव्हसतीत्यत्रापि हलि सर्वेषामिति लोपे प्राप्ते ईदृशप्रयोगस्यानभिधानस्यैव शरणीकरणीयत्वेन सर्वत्रेदृशानामनभिधानमेव युज्यते वक्तुम् । किंच हलि सर्वेषामित्यत्र वकारानुवृत्यापि गतार्थयितुं शक्यते । व्याख्यातं च भाष्यं कैयटेन । अत्राश्ग्रहणानुरोधेन चैतद्भाष्यकारेणोदाहृतं लण्सूत्रे तु न पदान्ता हलोऽणस्सन्तीत्युक्तमिति अतः एव भगवद्भिरुदासीनैरुत्तरार्थं तर्हीत्युक्तम् । तस्मादश्ग्रहणमदृष्टार्थं मूलं तु यथाश्रुतमेव । पदे किमिति । गौरवात्प्रश्नः । तन्त्रयुता-

मिति तन्त्र उक्तम् । एकारस्यायादेशः । उत्तरार्थमिति । तदुक्तमत्र भाष्ये पद इति शक्यमवक्तुं कस्मान्न भवति तन्त्रयुतम् । लक्षणप्रतिपदोक्तयोरिति । उत्तरार्थं तर्हि ङमो ह्रस्वादचि ङमुण्नित्यमित्यादेर्माभूद्दण्डिनेति । भुवश्च महाव्याहृतेरिति सूत्रे महाव्याहृतिग्रहणेनोक्तपरिभाषा नित्या । यदि त्विति वदतो मूलकृतोऽप्ययमेव स्वरसस्तेन पदग्रहणमिहार्थमपीति कश्चित् । अजादेः पदस्य ङमुण्नेति भाष्याक्षरार्थः । ह्रस्वात्परो यो ङम् तदन्तं यत्पदमित्यादिकं तत्सूत्रार्थं तु परमदण्डिनावित्यादावन्तर्वर्तिविभक्त्या पदत्वान्नुट् स्यात् । नन्त्तरपदत्वे चेति निषेध इति चेन्न अपदादाविति पर्युदासेन पदान्तत्वनिमित्तके विधौ प्रत्ययलक्षणं नेति न लुमतेत्यत्र भाष्यसंमतार्थेनेहाप्रवृत्तेः । किंच यत्रोत्तरपदस्य कार्यित्वं तत्रैव तत्प्रवृत्तिः । अत एव माषकुम्भवापेनेत्यादौ पदव्यवायेऽपीति प्रतिषेधासिद्धिरित्याधिकं नागेशीये दर्शयिष्यते चेदं हलन्तनपुंसके । तस्मान्मण्डूकप्लुत्योत्तरार्थं पदग्रहणमिति स्थितम् । अणः किमिति । दीर्घश्रुत्याचश्चेति परिभाषया च एव दीर्घो भविष्यतीति प्रष्टुभावः । वृढो वृढ इति । ऊदित्त्वेन वेट्कत्वाद्यस्य विभाषेति नेट्ढत्वधत्वष्टुत्वढलोपाः । ऋकारो नाणन्तर्गत इति दीर्घो नेति भावः । अणग्रहणसामर्थ्यादेवात्राण पूर्वेणान्यथोक्तरीत्यैव सिद्धेः । अत्राण पूर्वेणैव व्याख्यानादिति तु न युक्तम् । व्याख्यानस्यागतिकगतित्वादित्याहुः । ननु पूर्वस्येति न कार्यं सप्तमीश्रुत्यैव तस्मिन्निति परिभाषोपस्थानादत आह । पूर्वग्रहणमिति । अस्य सूत्रस्योत्तरपदाधिकारस्थत्वादुत्तरपदस्थयोरेव

-ढरेफयोः परतो दीर्घविधानं स्यादिति भावः । एवं चेदित्याह अजर्घा इति । गृधेर्यङ्लुकि उत्वेऽभ्यासस्य रुगागमे लङः सिपि शब्लुकि लघूपधगुणे रपरत्वे इतश्चेतीकारलोपे हल्ङ्यादिलोपे भष्भावे जश्त्वे दश्चेति रुत्वे अजर्घर् इति स्थिते रोरीति रेफलोपेऽनेन दीर्घ इति दिक् । मनस्रथ इत्यादि । हशि चेति देवो हसतीत्यादौ सावकाशम् । रोरीति पुनः रमत इत्यादौ लब्धावसरम् । उत्वमेवेति । सिद्धासिद्धयोरतुल्यबलत्वेन विप्रतिषेधसूत्राप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः । तदुक्तम् । पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति । अकोः किमिति । अकच्सहितयोरशब्दान्तरत्वादेव तत्र नाऽतिप्रसंगः इति प्रश्नः । एषक इति । अकोरिति निषेध एव तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति परिभाषां ज्ञापयतीति समाधानम् । अनञ्समास इति किमिति । नञोऽभावार्थकत्वेनाभावे प्रतियोगिनो विशेषणत्वात्पूर्वपदार्थप्रधानेनोपसर्जनत्वात्त्यदादीनाम इत्यस्याप्रवृत्तौ हल्ङ्यादिलोप एव भविष्यतीति शंकितुराशयः । तत्र पूर्वपदार्थप्रधानत्वेऽतौस्त इत्यत्र द्विवचनादि अत्वं भवतीत्यादौ पुरुषव्यवस्थादि च न सिध्येदित्याशयेन समाधत्ते । अस इति । एतद्ग्रहणमुत्तरपदार्थप्रधानतां नञ्समासे ज्ञापयतीति भावः । अत एवोत्तरपदार्थप्रधानस्तत्पुरुष इति प्रवादोऽपि सम्पद्यत इति दिक् ॥

इति स्वादिसंधिः । इति पञ्चमसंधिः ।

---

## अथ षड्लिंगम् ।

अथ पाचक औपगव इत्यादौ प्रत्ययान्तत्वेन प्रातिपदिकसंज्ञापर्युदासात्कृत्तद्धितयोर्ग्रहणमावश्यकं समासे स्वरसन्ध्युक्तरीत्या समुदायस्यार्थवत्त्वादर्थवत्सूत्रेणैव सिद्धेर्व्यर्थं तद्ग्रहणमत आह । नियमार्थमिति । ननु राजपुरुष इत्यादावपि प्रत्ययान्तत्वेन निषेधाद्विध्यर्थमेवास्तु कथमेतादिति चेन्न । प्रत्ययग्रहणे यस्मादिति परिभाषया स्त्रीप्रत्यये ज्ञापयिष्यमाणया वारणात् । तद्यथा । कृते समासे सुपो धातुप्रातिपदिकयोरिति सुपो लुगर्थमपेक्षिता प्रातिपदिकसंज्ञा तत्र च पुरुषशब्दस्य प्रत्ययान्तत्वेऽपि राजपुरुष इति समुदायस्योक्तपरिभाषया प्रत्ययान्तत्वाभावात् । ननु राजकुमारीत्यादौ स्त्रीप्रत्यये चानुपसर्जनेनेति वाचनिक्याण्यङः संप्रसारणमिति सूत्रे भाष्योक्तपरिभाषाया अप्राप्तेर्दोष इति चेन्न, अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति हलन्तपुंल्लिङ्गे ज्ञापयिष्यमाणया परिभाषयान्तरङ्गहल्ङ्यादिलोपस्याप्रवृत्तेः श्रूयमाण एव सुपि समासेन तत्र चाप्रत्ययान्तत्वेन प्रवृत्तायाः प्रातिपदिकसंज्ञाया एकदेशविकृतमनन्यवदिति परिभाषया निर्जरशब्दे वक्तव्यया विभक्तिलुक्यपि सुलभत्वात् । ननु चार्थवत्त्वं शक्तिलक्षणाव्यञ्जनान्यतमसम्बन्धेनार्थबोधकत्वमिति स्वीकाराच्छशशृङ्गमित्यादौ तदभावात्समासग्रहणं विध्यर्थमिति चेन्नैवम् । तत्रापि बौद्धशक्तिस्वीकारस्यान्यत्र प्रपञ्चितत्वात् । ननु वृत्तिमत्प्रातिपदिकमित्येवास्तु सूत्रमिति चेन्न भाषाशब्दानामप्यवश्यं शक्तिस्वीकारेण तत्रापि संज्ञया साधुतापत्तेस्तिङादावपि

दोषापत्तेश्च । न च कृत्ताद्धितवृत्त्यभिप्रायेण तादृशं सूत्रमस्त्विति चेत् अव्युत्पन्ने डित्थादावव्याप्तेः । मनायन्ते क्षुत्रोपावाचिति दिक् । ननु भाष्यकृदभिहितप्रत्याहाराद्दति प्रातिपदिकमिति न्यासस्वीकारेण सुप्तिङन्तभिन्नं प्रातिपदिकसंज्ञा स्यादित्यर्थात्समासस्यापि स्यान्मास्ताश्च नियमसूत्रमिति चेन्न । प्रत्येकं वनमित्यादौ च दशदाडिमानि षडपूपा इति समुदायेषु च सञ्ज्ञानिरासाय बहुपटव इत्याद्यर्थं चार्थवत्सूत्रस्यावश्यकरणीयत्वे नियमसूत्रस्यापि करणीयत्वात् । एतेनाहन्नित्यत्र हन्तेर्लङि नलोपवारणायाधातुग्रहणस्यावश्यत्वे नियमसूत्रस्य लिङ्धुगित्याद्यर्थं कृद्ग्रहणस्यावश्यकत्वात् काण्डे कुण्डे इत्यादावतिव्याप्तेश्चोक्तन्यासो न कार्य इति मन्दोक्तमपास्तम् । प्रत्ययलक्षणेन लुप्ततिङन्तसुबन्तत्वाश्रयणेनवेष्टसिद्धेः । सप्तम्यधिकरणे चेत्यादिनिर्देशैर्विभक्त्यादेशस्यान्तवद्भावानभ्युपगमात् काण्डे इत्यादौ दोषाभाव इति यथान्यास एवात्रापि वक्तुं शक्यत्वादिति दिक् । नियमस्वरूपमाह यत्रेति । संघातेऽर्थवति पदसमुदाये इत्यर्थः । समासस्य सजातीय एव नियम इत्याह पूर्वो भागः पदमिति । चतुर्विधेऽपि समासे पूर्वभागस्य पदत्वाव्यभिचारादिति भावः नेनु जन्मवानित्यादौ स्वादिष्वसर्वनामेत्यनेन पूर्वभागस्य पदत्वात् सञ्ज्ञानापत्तिः । न च तद्धितान्तत्वात् सिद्धिः तस्यौपगवमित्यादौ यचि भमिति पूर्वभागस्य भत्वेन नियमाप्राप्त्या चरितार्थत्वादिति चेन्न । पूर्वनियमे उत्तरस्तु प्रत्ययो नेत्यंशपूरणात् । एवमपि राजेयानित्यत्र पूर्वभागस्य पदत्वेऽप्युत्तरस्य प्रत्ययत्वान्नियमाप्राप्तेः समुदायस्य प्रातिपदिकत्वं स्यादिति चेन्मैवम् ।

पूर्वभागप्रकृतिकप्रत्ययो नेति व्याख्यायात्रातथात्वात् । न चोक्तरीत्यापि पूर्वो भागः पदमिति नियमांशं विनापि समीहितसिद्धेस्तदंशो व्यर्थ इति वाच्यम् । बहुपटव इत्याद्यर्थमावश्यकत्वात्तद्यथा बहुच्विशिष्टस्य प्रातिपदिकत्वेन जसो लुकि सति चितः सप्रकृतेर्बह्वकजर्थमित्यनेन प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्त उदात्तो वाच्य इत्यर्थः । केन पटुपदोत्तरोकारस्योदात्तत्वसिद्धिः अन्यथा जस एवोदात्तत्वे अनिष्टापत्तेः । न च तद्धितग्रहणस्य तद्धितविशिष्टपरत्वान्न दोष इति शंक्यम् । पचतकीत्यादावतिव्याप्तेः । ननु वृषण्वसुरित्यत्र वृषण्वस्वश्वयोरिति सूत्रेण पूर्वभागस्य भत्वान्नियमाप्राप्त्या संज्ञानापत्तिरिति चेन्न । तस्य छान्दसत्वात् वृषण्सु वसु सु इत्यवस्थायामेव प्रातिपदिकसंज्ञाप्राप्तेस्तदानीं च वसुशब्दपरत्वाभावेनैव भसंज्ञायाः प्रवृत्तेश्चेति दिक् । नियमफलमाह । वाक्यस्य नेति । गामानय शुक्लां दण्डेनेत्यादौ सति प्रातिपदिकत्वे सुपोऽश्रवणापत्तिरिति भावः । ननु कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषया समासे कथयिष्यमाणया मूलकेनोपदंशं भुंक्ते इत्यादिवाक्यस्य स्यादेव संज्ञा । न च भुजिक्रियायां मूलकेनेत्यस्य करणत्वेनान्वयादुपदंशं कृदन्तं प्रति कारकत्वमेव नास्तीति भ्रमितव्यम् । उपदंशमित्यत्र कर्मत्वेनाप्यन्वयस्य वक्तुं शक्यत्वात् तत्र च प्रधानभुजि क्रियानिरूपितकरणत्वसंज्ञाप्रयुक्ततृतीयैव पश्य मृगो धावतीत्यादाविवेति स्पष्टमन्यत्रेति चेन्न समासकृतनियमेन परत्वात्कृदन्तप्रयुक्तकार्यबाधनस्याङ्गीकारादिति संक्षेपः । अधिकारसूत्रे ङ्याप्पोर्ग्रहणं मास्त्वित्याक्षिपति ।

लिङ्गविशिष्टस्यापीति । लिङ्गबोधकप्रत्ययविशिष्टस्यापीति तदर्थः । इयं च परिभाषा युवात्खलतीत्यादिसूत्रे युवग्रहणादिभिर्ज्ञापितेति स्पष्टमाकरे । तद्धितोत्पत्तिरिति । अन्यथोभयत्रापि प्रत्ययत्वेनोत्पत्तावनियमः स्यादिति भावः । ङ्यावन्तात्तद्धितोत्पत्तौ तु आर्यका आर्यिकेति रूपद्वयसिद्धिस्तथथा प्रथममार्यपश्चादपि ततः स्वार्थिकेकानिकेऽण इति ह्रस्वत्वे उदीचामातस्थाने यकपूर्वाया इत्याकारस्थानिकाकारस्येत्वविकल्पात् । अन्यथा तु प्रत्ययस्थादित्यनेनोत्सर्गविधिना नित्यमेवेत्वे आर्यिकेत्येकमेवरूपं सिध्येत् ङ्याब्ग्रहणं स्त्रीप्रत्ययमात्रोपलक्षणम् तेन युवतितरेत्यादौ वयोवाचके वैकल्पिकजातित्वस्य स्वीकाराज्जातेश्चेति युवत्वनिषेधसिद्धिः । किंच तद्धितग्रहणं समासान्तप्रत्ययाद्यतिरिक्तपरम् तेन यूनीतिरिति बहुगोमतिकेति प्रयोगो नेति बोध्यम् । वस्तुगत्या ङ्याब्ग्रहणं न कर्तव्यम् । तथाहि चकालतनेषु कालनाम्न इत्यादिज्ञापनात्सुबन्तात्तद्धितोत्पत्तिरिति परमार्थः । तत्र स्वार्थद्रव्यलिंगसंख्याकारकेति पञ्चविधप्रातिपदिकार्थप्रयुक्तकार्याणां क्रमनियमः प्रथमं शब्दप्रवृत्तिनिमित्तत्वेन जातिबोधः । ततो धर्मित्वेन प्रधानत्वाल्लिङ्गादिभिरपेक्षितत्वाच्च व्यक्तिबोधः ततः स्वमात्रापेक्षत्वाल्लिङ्गबोधः ततो विजातीयक्रियापेक्षया कारकापेक्षया सजातीयपदार्थपेक्षसंख्यायाः प्रथमसुपस्थितत्वात्संख्याबोधः । ततः कारकरूपविभक्त्यथापेक्षया कारकबोधः । तथा च लिङ्गकार्यान्तमेव तद्धितोत्पत्तेः पूर्वोक्तप्रयोगाणां नानुपपत्तिरिति वदन्ति ननु रामा इत्यादौ दीर्घो न स्यात्सवर्णदीर्घबाधकत्वादतो गुणस्ये-

स्याशंक्यापवादविषयबाध्यविशेषचिन्तापक्षमूलन्यायेन समाधत्ते पुरस्तादिति । अयं च न्यायो नादिचीतीज्ग्रहणेन ज्ञाप्यते तद्धि रामा रामानित्यादौ निषेधाभावार्थं क्रियते पररूपेणैव पूर्वसवर्णदीर्घबाधने हि तद्ग्रहणं व्यर्थमिति । एवं हि पाठक्रमः अतो गुणे, अकः सवर्णे दीर्घः, प्रथमयोः पूर्व इति अत्र वक्तव्यमुक्तं स्वरसन्धौ, वक्ष्यते च । हे रामेत्यादौ विप्रतिपत्तिं निरस्यति । संबुध्याक्षिप्तस्येति । प्रत्ययविधावङ्गस्यापेक्षितत्वेनाङ्गाक्षेपस्योचितत्वादिति भाव इत्येके । संबुद्धेः प्रत्ययत्वेन यस्मात्स विहितस्तदादीत्यंशरूपस्याङ्गस्याक्षेपो न त्वङ्गस्येति सूत्रस्येति स्पष्टं भाष्य इत्यन्ये । एवं च मौलिकार्थस्य हे राम इत्यादिर्विषयो न त्वन्य इत्याह हे कतरादिति । इह प्रकृत्यकारस्य टिलोपेनापहाराद्ध्रस्वान्ताङ्गात्परहलोऽभावादित्याशयः । ननु येन यदाक्षिप्यते तत्तस्यैव विशेषणमिति न्यायस्य जात्याक्षिप्तव्यक्तौ व्यक्तत्वात्प्रकृतेऽपि संबुद्ध्याक्षिप्तस्याङ्गस्य सम्बुद्धौ एवान्वयस्योचितत्वेनाङ्गात्परस्यां संबुद्धेरवयवस्य हलो लोप इति सूत्रार्थ उचितस्ततश्च हे कतरदित्यादिसिद्धेर्मूलोक्तार्थो न युक्तो उक्तन्यायविरोधादिति चेन्मैवमित्याह कुलेति । तथा सतीति । तथासतीदं न सिध्यतीत्याभिप्रायः । अत्र स्वमोर्नपुंसक इति लोपात्परत्वादतोऽमि कृतेऽमि पूर्वरूपत्वे च हलन्ताङ्गात्परसंबुद्धेरभावान्मलोपो न स्यात् । नन्वेकादेशस्य पूर्वान्तवद्भावेन ह्रस्वान्ताङ्गात्परत्वमिति चेत् हन्त भोः परादिवद्भावं विना अमि संबुद्धित्वस्यैवाभावात् । न च द्वयोराश्रयणमुभयत आश्रयणेनान्तादिवदिति निषेधात् सत्य-

प्येवं ह्रस्वसंबुद्ध्योः पौर्वापर्यव्यवहारासंभवापत्तेश्च । एवं च लक्ष्यानुरोधादन्याक्षिप्तस्याप्यन्यत्रान्वय इति स्वीकारेण कुत्राचिन्न्यायास्वीकार इति भावः । नन्वेवमपि कथमत्र मकारलोपः संबुद्धित्वस्य सकारमात्रनिष्ठत्वेन स्थानिभूताद्धर्मत्वादनल्विधाविति निषेधेन स्थानिवद्भावाभावेनामः संबुद्धित्वविरहान्मस्य संबुद्ध्यवयवत्वाभावादिति चेन्न । सुसञ्ज्ञाया उकारविशिष्टे सत्त्वेन सुबुपस्थाप्ये जायमानैकवचनसंज्ञाया विशिष्टे सत्वे संबुद्धिसञ्ज्ञायामित्सञ्ज्ञकोकारविशिष्टस्यैवोद्देश्यत्वेन तस्यानल्विधित्वात्स्थानिवद्भावेन संबुद्धित्वस्य सुलभत्वादिति न कश्चित्क्षुद्रोपद्रवः । एङ्ग्रहणं किमिति । हरे विष्णो इत्याादावङ्गाधिकारस्थात्परनिमित्तापेक्षाच्च गुणात्पूर्वं ह्रस्वान्तत्वादेव सिद्धिः । सेप्रभृतीनां त्वनभिधानमेव सति वाभिधाने एङ्ग्रहणेनैव सिद्धेः प्रत्याहारो व्यर्थ इति प्रष्टुराशयः । समाधत्ते हरे इति । तत्सामर्थ्यादेवात्र सन्निपातपरिभाषानिवृत्तिः गुणात्संबुद्धेरिति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्याच्चेति दिक् । संनिपातपरिभाषाया अप्रवृत्तेरेव हे लक्ष्मि इत्यादौ संबुद्धिलोप इत्याहुः सन्निपातेति । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषाशरीरम् । सन्निपातः संश्लेषः, स लक्षणं निमित्तं यस्य स तं सन्निपातं यो विहन्ति निवर्तयति स तद्विघातस्तस्य निमित्तं कारणं न भवतीति तदर्थः । एवं चेयं परिभाषोपजीव्योपजीवकभावविरोधमूलिका । उपजीवकविधिरुपजीव्यविधेर्विघाते कारणं न भवतीति वर्त्तुलार्थः । ननु यञादित्वसापेक्षदीर्घस्य बहिरङ्गतया सिद्धत्वान्नेह संनिपातविघात इति

त्वेन्न । आरोपितासिद्धत्वेऽपि वास्तविकतद्विघातस्य जायमानत्वेन तत्प्रवृत्तेरिति दिक् । कथ्ययेति । न चात्राकृत्सार्वधातुकयोरिति दीर्घोऽतः कथमस्यानित्यताज्ञापकत्वम् । तस्यापि संनिपातपरिभाषयैवाप्राप्तेरित्याशयात् । विरोधाभावात्फले विशेषाभावाच्च परत्वेऽप्यकृदिति सूत्रमत्र नोपन्यस्तम् । नन्वकृत्सार्वेति पर्युदासेन तिङन्ते एवास्य प्रवृत्तिरित्यपि युक्तम् । अंगवृतपरिभाषां चाज्ञापयितुं ज्यादादीयस इति सूत्रे ह्रस्वमकारं विधाय ज्यायानित्यत्राकृत्सार्वेति दीर्घं विदधतां भाष्यकृतां विरोधापत्तेः । झलि किमिति । रामाणामित्यादिकं सन्निपातपरिभाषया न दोषसहम् । उतो वृद्धिर्लुकि हलीत्यनुवर्त्य हलि परत एव एत्वविधानादिति प्रश्नः। अतिरिच्यमानं झल्ग्रहणमेत्वविधावुक्तपरिभाषाया अनित्यतां ज्ञापयति तेन सर्वेषामित्यासिद्धमित्युत्तरम् । स्यादेतत् । बहुवचने झलीगित्यस्तु लाघवात्सूत्रम् मैवम् । आद्यन्तौ टकिताविति किदागमस्यान्तावयवत्वादिगन्तनपुंसकत्वेनेकोऽचीति सूत्रेण ज्ञानयोरित्यादौ नुमापत्तेः । न चाड्गुणोऽन्तरङ्गत्वात्प्रवर्ततेति वाच्यम् । वार्णादाङ्गमिति न्यायेन नुम एव प्रवृत्तेः । न च समाननिमित्तकत्वरूपसमानाश्रयत्वे एवायं न्याय इति वाच्यम् । इयाय इयेषेत्याद्यसिद्धेः द्वित्वे कृते अन्तरङ्गं सवर्णदीर्घं न्यायेनैव बाधित्वा वृद्धिप्रवृत्तौ रूपासिद्धेः त्वदुक्तसमानाश्रयत्वाभावेन तदसङ्गतिः स्यादाङ्गवारणयोः समानकार्यित्वे एव तत्प्रवृत्तिरित्युक्तेर्न दोषः । इहापीकारस्य नुमस्थानित्वादाड्गुण इत्यस्यापि पूर्वपरयोरित्यादिनिर्देशेनेकारस्य स्थानित्वेन समानाश्रयत्वात् । एतेनेह वार्णादाङ्गमित्यस्याप्रवृत्तेरन्त-

रङ्गत्वान्नुमः पूर्वमेकादेशस्यैव प्रवृत्तिरिति मन्दोक्तमपास्तम् । ननु ठकारोऽनुबन्ध्यताम् । एवमपि सुबाद्यवयवत्वात् निर्जरेभ्य इत्यादौ जरसादेशापत्तिरिति केचित् । वस्तुगत्या एभ्य इत्यत्र नित्यत्वादिटि कृते हलि लोपं बाधित्वाऽनादेशापत्तेः । एतेन प्रतिपत्तिक्लेशवारणाय तथा न्यासो न कृत इति मन्दोक्तमपास्तम् । ननु बहुवचने स्भ्येदिति न्यासोऽस्तु मैवम् सुट्तिथोरित्यादाविकारोच्चारणेन न पुनरन्तरेणाचमित्युच्चैरिति सूत्रस्थभाष्येण च शास्त्रबोधिताजव्यवहितहलसमुदायस्यासाधुत्वबोधनात् स्कोरित्यादिस्तु सौत्रप्रयोग इत्याहुः । यद्यपि पर इति । ननु इदं न सत् नामीत्यस्य नित्यत्वात् कृतेऽपि सुपि चेति दीर्घे पर्जन्यवल्लक्षणप्रवृत्त्या नामीत्यस्य प्रवृत्तेरिति चेन्न । शब्दान्तरस्येति न्यायेनानित्यत्वात् । न चैकदेशविकृतेति न्यायेन शब्दान्तरत्वाभाव इति वाच्यम् । शब्दान्तरस्येति न्यायविषय एकादेशन्यायाप्रवृत्तेः अन्यथोक्तन्यायस्य सर्वथा वैयर्थ्यापत्तेः । अत एव चिकीर्षतीत्यादावज्झनगमामिति दीर्घे दीर्घस्यान्यथा तु ह्रस्वस्येति शब्दान्तरप्राप्त्या द्वित्वमनित्यमिति भाष्योक्तं संगच्छते । न च नामशब्दमुच्चार्य विहितत्वेन प्रतिपदोक्तत्वात् नामीत्यस्यैव प्रथमं प्रवृत्तिरिति वाच्यम् । प्रतिपदोक्तेऽपि निरवकाशस्य बीजत्वेन नामीत्यस्य निरूपयिष्यमाणावकाशत्वात् नाम्त्वसुप्त्वाश्रयणेन बहिरंगत्वं तूभयोः समम् । तस्मान्मूलोक्तं युक्तमेवेत्याहुः । परिभाषाविरोधादिति । अनित्यता सर्वत्राभ्युपेयेत्यत्र मानाभाव इत्याशयः । आरम्भसामर्थ्यादिति । सुपि चेति तु रामाभ्यामित्यादौ साव-

काशमिति भावः ननु षट्चतुर्भ्य इति नुटि कतीनामित्यत्र परि-भाषाप्रवृत्त्याभावान्नामीत्यपि चरितार्थम् । किञ्च सरूपाणामित्या-दिनिर्देशेनोक्तपरिभाषाया अनित्यताभ्युपगमेऽपि रामाणामित्यादौ परत्वात्सुपि चेति अस्यैव प्रवृत्तेरत्र नामीत्यस्योपन्यासो मोघ एव । न च चतुर्ग्रहणेन हलन्तषट्सञ्ज्ञकादेव नुट् नतु कतिशब्दा-दिति वाच्यम् । द्विस्त्रिश्चतुरिति सूत्रे कृत्वोर्थग्रहणेन साहचर्य्य-स्यानित्यताश्रयणात् रेफो यथा हलसञ्ज्ञकस्तथाऽमूसञ्ज्ञोऽपीत्य-मन्तषट्सञ्ज्ञकादेव नुट् नतु षकारांतादिति षण्णामित्यत्र नुड-नापत्तेश्च । तस्मात्कतीनामिह चरितार्थ्यान्नामीत्यस्य कथं वैयर्थ्य-मिति चेत् कतेर्नामीत्येवास्तु विशेषसूत्रम् नैकमुदाहरणं योगारम्भ-म्प्रयोजयतीति भाष्यकृदुक्तेः । योगारम्भमिति सामान्यं योगारम्भ-मित्यर्थस्तेनाग्नेयमित्यस्याग्नेर्ढगतिप्रयोजकत्वमव्याहतमिति भावो भाष्यकर्त्तुः । सामर्थ्यादित्यस्य सामान्यसूत्रारम्भसामर्थ्यादित्यर्थः । ननु ह्रस्वनद्याप इत्यत्र नुटीति योगं विभज्य सामान्येन नुटं विधाय नद्याप इति दीर्घान्ताच्चेन्नद्याप एवेति नियमाद्दीर्घान्तेषु दोषो न हलन्ताच्चेत्षट्चतुर्भ्य एवेति नियमाद्वा द्रुहमुहष्णुहष्णिहामि-त्यादिनिर्देशाद्वा हलन्तेषूपपत्तिं प्रतिपाद्य ह्रस्वग्रहणं प्रत्याख्यायते ततश्चोक्तपरिभाषायां अप्राप्तेर्नामीति नोपक्षीणमिति चेन्नैवम् । नद्याप इत्यस्य स्त्रीलिंगाच्चेन्नद्याप एवेति विपरीतनियमापत्तौ मतीनामित्यादौ नुडनापतेरुक्तकल्पनावैफल्यात् । एतेन बहु-श्रेयस्यादीनां पुँल्लिंगानामनदीत्वदर्शनात्तिसृणामित्यत्र नामि-दीर्घनिषेधाज्ज्ञापकाच्च स्त्रीलिंगाच्चेन्नद्याप एवेति नियमः

कर्तुमशक्यः । दीर्घान्ताच्चेति नद्याप एवेति तु सुकर एव । आ आनिति प्रश्लेषेण सिद्धान्ते दीर्घाकारस्य ग्रहणात् । तत्साहचर्येण नदीसञ्ज्ञकानामपि दीर्घानामेव ग्रहणादिति मन्दोक्तमपास्तम् । यतो नदीत्वस्य नित्यस्त्रीविषयत्वेनार्थान्नित्यामित्यस्य सिद्धत्वान्निवेशाद्वा त्रिशब्दस्य च नियमान्तर्गतत्वेन षट्चतुर्भ्यश्चेत्यत्र त्रेरित्यस्यानुवर्त्तनेन वा नुट् सिद्धयोक्तज्ञापकसम्भवात् बहुश्रेयस्यादीनां तु अर्थान्तरसंक्रमात्पूर्वं विद्यमानं नित्यस्त्रीत्वमादाय तस्या अर्थान्तरसंक्रमेऽपि नदीत्वं वक्तव्यमित्यर्थकेन प्रथमेतिवार्त्तिकेनाभीष्टं तत् । वार्त्तिकाभावेऽपि यथोद्देशपक्षे पूर्वप्रवृत्तां सञ्ज्ञां कार्यकालेऽप्यवयवगतामादायातिदिश्यते भाष्येऽप्युक्तम् । अवयवस्त्रीविषयत्वात्सिद्धम् । अवयवोऽत्र स्त्रीविषयस्तदाश्रया नदीसञ्ज्ञा भविष्यतीति । तस्माद्ध्रस्वाश्रय एवेह नुडिति परिभाषाप्रवृत्तेर्नामीत्यारम्भसामर्थ्यात्परिभाषां बाधत इत्युक्तम् । इण्कोः किमिति । टाङसीत्यत्र सकारोच्चारणसामर्थ्यादेव दोषाभाव इति प्रश्नः । तत्र सकारोच्चारणस्येण्कोरित्यनुवृत्तावेव तात्पर्यग्राहकत्वमन्यथाऽमुष्येत्यादौ षत्वं न स्यादित्युत्तरम् । विशेष्याभावात्सर्वाद्यन्तस्य सञ्ज्ञानुपपत्तिप्रसक्तौ तां साधयितुं प्रतिजानीते । तदन्तस्यापीति । द्वन्द्वे चेति प्रथमार्थे सप्तमीयम् । द्वन्द्वः सर्वनामसञ्ज्ञो नेत्यर्थः । नहि तदन्तविधिं विना समुदायेऽस्ति सञ्ज्ञाप्राप्तिर्या तेन पर्युदस्येतेति भावः । नन्वङ्गाधिकारोक्ततदन्तविधिं विनैव परमसर्वस्मायित्यादौ सिद्धेस्तदन्तसञ्ज्ञायाः किं फलमत आह । तेनात । ज्ञलादौ सञ्ज्ञाविधाविति निषेधात्तदन्तविध्यभावादित्या-

शयः । नन्विहावयवनिष्ठसर्वनामत्वेन सुबुत्पत्तेः प्रागेव त्रलादय-स्सेत्स्यन्तीति चेन्न । सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तात् सर्व-नामप्रकृतिकसुबन्तात् त्रलादय इति तत्सूत्रार्थेन परमसर्व इति समुदायस्यैव सुबन्तत्वादिति दिक् । किं च प्रथमार्थे सप्तम्यन्तत्वा-दिदं सूत्रं समुदायस्यैव सञ्ज्ञानिषेधकं पर्यवस्यति । अवयवानां निषेधे तु वर्णाश्रमेतराणामित्यादौ सर्वार्थवाचकसर्वाद्यन्तत्वेन समुदायस्य सञ्ज्ञायां सुडापत्तिः । अवयवस्य निषेधेऽपि सर्वार्थ-वाचकसर्वादित्वानपायात् । अत एव वक्ष्यति समुदायस्यायं निषेध इति । न चावयवसर्वनामत्वेनाकजापत्त्या तन्मध्यपतित-न्यायेन शीभावः स्यादिति वाच्यम् । विभाषा जसीत्यत्र जसा-धारे इत्याद्यर्थवर्णकयत्नेनैव तद्वारणात् । एतेन वर्णाश्रमेतरका इत्य-त्राकचि शीभावः स्यादिति मन्दोक्तमपास्तम् । अवयवनिषेधे फला-भावोऽपि त्वच्छब्दस्य तान्तत्वेकाकचोर्विशेषस्तु न फलम् । तस्य सर्वनामत्वे दृढतरमानाभावात् बहुसंमतत्वाच्चेत्यधिकं नागेशीये । वस्तुगत्या येन विधीत्यत्र भाष्योक्ततदन्तस्य प्रयोजनं सर्वनामा-व्ययसञ्ज्ञायामिति वार्तिकाद्विशेषशब्दस्वरूपस्य संभवाच्च विशे-ष्यविशेषणभावेनैवास्तान्तदन्तविधिः केवलानान्तु व्यपदेशिवद्भा-वेन सर्वादीनीत्यावर्तनेन वा सञ्ज्ञासिद्धिः । गौणे महासञ्ज्ञयैव सञ्ज्ञाभावः । किञ्च द्वन्द्वे चेत्यस्य ज्ञापकत्वमेव न युज्यते । द्वंद्वस-मासे हि उद्भूतावयवानुद्भूतावयवभेदरूपे समूहो विशेष्यो घटक-पदानि विशेषणानीति बहुव्रीहाविवोपसर्जनत्वं घटकपदानाम् । अत एव कुक्कुटमयूर्यावित्यादावुपसर्जनह्रस्वत्वमाशंक्य द्वन्द्वे प्रतिषेधो

वक्तव्य इति वचनमवस्थापितं भाष्ये, कैयटे च स्पष्टतरमिदम् । एतत्सर्वं दर्शयिष्यते समासे एवं चेदमपि सूत्रं न बहुव्रीहावित्येतत्समानगतिकम् । तस्मादयमेव प्राकारश्चतुरचित्ते चमत्कारचातुरीं विधत्ताम् । नानुबन्धकृतमिति । इयश्चानेकालित्यत्र शिद्ग्रहणेन ज्ञाप्यते इति तत्र सूत्रे उक्तम् । प्रागित्सञ्ज्ञाया इति । दृष्टान्ते ऋइत्यत्रोपदेश एवोपदेशेऽजित्यनेन ऋकारस्येत्सञ्ज्ञेति भवत्यन्त्यादेशः । इह तु तावत् सर्वादेशस्ततस्थानिवद्भावेन प्रत्ययत्वं ततो लशक्विति प्रत्ययादित्वनिमित्तकेत्सञ्ज्ञा ततश्शित्वं भवतीति क्व दृष्टान्तदार्ष्टान्तिकयोः समतेत्याशयः । वस्तुगत्यानेकाल्सूत्रे इत्सञ्ज्ञायोग्यशकारवत्त्वमेव शित्त्वं स्वीकृतमतोऽत्र शित्त्वादेव सर्वादेशः परिभाषया अनेकाल्त्वाभावात् । तत्र हि अनुबन्धकृतमित्यस्यानुबन्धनयोग्यकृतमित्यर्थं । न च डाणलादौ दोषः । डा आण ल् इति प्रश्लेषेणानेकाल्त्वात्सर्वादेशसिद्धेः । एतेनेत्सञ्ज्ञायोग्यग्रहणे डाणलादीनां सर्वादेशतानापत्तिरिति मन्दोक्तमपास्तम् । ध्वनितश्चेदं लुङः प्रथमस्यानेकालिति सूत्रयोर्भाष्ये इत्यधिकं नागेशीये । अथोभादुदात्तो नित्यमुभस्य सर्वनामत्वे कोऽर्थ इति भाष्यप्रयोगयोः प्रति पितासितद्वित्वार्थबोधकद्विवचनान्ततयानुपपत्तिं मत्वा स्वरूपाणामनुकरणे अस्मद्युत्तम इत्यादावनभिव्यक्तस्त्वादादेशाभाववदर्थपरस्यैव द्विवचनान्ततेति सूचयन्नाह । उभशब्द इति । उभश्चासौ शब्दश्चेत्यर्थः । व्याप्यव्यापकयोर्मध्ये व्याप्यस्यैव पूर्वनिपातो भीम नृप इत्यादाविव तेन शब्दस्य विशेषणत्वात्पूर्वनिपात इति न शंकनीयम् । पश्चकं

प्रातिपदिकार्थ इति सिद्धान्तं व्यवस्थापयति । द्वित्वेति । संख्याप्रकारकसंख्येयविशेष्यकार्थाभिधायक इत्यर्थः । ननु प्रकृत्यैव सकलार्थबोधे विभक्तिरनर्थिका । किञ्च द्व्येकयोर्द्विवचनैकवचने इत्यादिकमसंगतमित्याशंक्य द्योतकत्वेनैव विभक्तिः सार्थिका सूत्राणि तु नियमार्थान्येवेत्याह । अत एवेति । यतः प्राकृत एवार्थो अस्मादेव हेतोरित्यर्थः । नित्यमित्यादि । द्विवचनान्त एवेत्यर्थः । अनन्वितविभक्तेरपेक्षया अनुवादकविभक्तेर्न्याय्यत्वादिति भावः । एतत्सर्वं कारके दर्शयिष्यते । ननु किमर्थस्सर्वादिषूभशब्दपाठः । सर्वनामकार्याणां स्मयादीनां द्विवचनेऽभावात् न च सर्वनाम्नः तृतीयेतिसूत्रेण षष्ठीतृतीयेति पाठफलम् । निमित्तकारणहेतुषु सर्वासां प्रायो दर्शनमिति हेताविति सूत्रे भाष्योक्तवार्तिकेनैव तयोः सिद्धत्वादत आह । तस्येहेति । ननु कप्रत्ययेनैव सामान्यतो विहितेन समीहितरूपसिद्धेः कृतमकजर्थपाठेन । न च काकचोः स्वरेऽस्ति विशेषः । प्रत्ययस्वरचित्स्वराभ्यामन्तोदात्तस्यैव सत्त्वात् । न च सुबन्तात्तद्धितोत्पत्तिरिति मते अकचि तत्प्रयुक्तमन्तोदात्तत्वमुभकाभ्यामित्यादौ सुबन्तस्य भवति कप्रत्यये तु प्रकृतेरित्यस्ति विशेषः ताद्धितविधौ प्रातिपदिकादित्यस्यैवाधिकारात् प्रातिप्रदिकस्यैव प्रकृतित्वात्स च जायमानो न्यायात्सुबन्तात्पर इत्यन्यदेतत् । न च ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकजन्यत्र तु सुबन्तस्येति सुबन्तप्रकृतित्वं तव मते विरुद्धम् । वचनप्रामाण्यात् । न चाकचि तन्मध्यपतितन्यायेन तस्योभग्रहणेन ग्रहणे उभकावयवौ यस्येत्यर्थे

उभकशब्दादयचि उभयक इति प्रयोगो भवति कप्रत्यये तु नेति विशेषः। ईदृशप्रयोगस्यानभिधानस्य वक्तुं शक्यत्वात्। कश्चेदानीं काकच्योर्विशेष इति सर्वादिसूत्रभाष्यप्रामाण्यात्। तस्मात् कप्रत्ययेनैव सिद्धिरित्याभिप्रेत्य पर्यनुयुंक्ते। न च केति। उभशब्दस्य द्विवचनपरत्वमकचा न निहन्यते। टेः प्राग्जायमानत्वेन तन्मध्यपतितन्यायेनोभयग्रहणेनोभकग्रहणात् कप्रत्ययेन तु द्विवचनपरत्वं विहन्यते। प्रातिपदिकात्परत्र जायमानत्वेन व्यवधायकत्वादित्याशयेन समाधत्ते। द्विवचनेति। अयच्प्रसंगादिति। उभशब्दात्तसोः परतः स्वार्थे यथाऽयज्भवति तथा कप्रत्ययेऽपि स्यादिति भावः। तथा हि उभादुदात्तो नित्यमिति सूत्रं विभज्यते। उभादुदात्त इत्येको योगः। द्वित्रिभ्यामिति सूत्राद्वेत्यस्य नानुवृत्तिरस्वरितत्वात्। तेनावयववृत्तेः संख्यावाचिनः उभशब्दादवयविन्यर्थेऽयच्स्यात्, उभयो मणिः। ततो नित्यम्। उभशब्दाद्वृत्तिविषये नित्यमयच्स्यात्स्वार्थे उभयत उभयत्रेति सिद्धिः नन्वेवमकचि कृतेऽप्ययन्दुर्वारो वृत्तिविषये स्वार्थे नित्यमयाजिति त्वयैवोक्तत्वात्, नैवम्। योगविभागस्येष्टसिद्ध्यर्थतयोभौसाभ्यासस्येति निर्देशेन च यत्र द्विवचनं न श्रूयते तत्रैवायच् न तु वृत्तिविषये इति व्याख्यानात्। ननु द्विवचनेनायाजिति किं राज्ञामाज्ञास्ति तत्राशंक्य वार्त्तिकं प्रमाणयति। उभयोऽन्यत्रेति। उभय इति यः स्वार्थिकायजंतस्सोऽन्यत्र प्रयुज्यते न तु द्विवचने उभशब्दादुत्पन्नं द्विवचनं लुका नापहृतं यत्र ततोऽन्यत्रायाजिति विवक्षितार्थात्। तस्मादुभयशब्दपाठोऽकजर्थः सर्वादिगण इत्याहुः। भाष्ये तूभशब्द-

पाठः प्रत्याख्यातः । तद्यथा केऽप्यन्तरेण वचनं द्विवचनपरो भविष्यति कथं स्वार्थिकप्रत्ययाः प्रकृतितोऽविशिष्टा भवंतीति । अयं भावः यथाकच्यज्ञातोपसर्जनेऽप्यवैजात्यार्थात्स्वार्थानुवादकाद्विवचनपरत्वमस्ति तथा कप्रत्ययस्याप्यज्ञाताद्यर्थविशिष्टस्वार्थे विधानेन द्वित्वसंख्याप्रकारसंख्येयविशेष्यकबोधविषयार्थानुवादकत्वमिति । ननु कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय इति न्यायेन कृत्रिमस्यैव द्विवचनस्य वार्तिके ग्रहीतुमुचितत्वम् अन्यथात्र तासिलादावतिप्रसक्तत्वादिति चेन्न । उभयशब्देनोभशब्दग्रहणवद्वार्त्तिके द्विवचनशब्देनाकृत्रिमस्यापि ग्रहणे दोषाभावात् । अत एवोभयो रुभावित्यादौ नायच् । किञ्चात्र तासिलादौ विभक्त्यंतस्य स्वार्थे विहिताविति तत्तत्कारकशक्तिप्रधानावेवेति न तदुक्ताद्विवचनमिति दिक् । उभयशब्दस्येति । उभावयवौ यस्येति उभादुदात्तो नित्यमिति तयपोऽयच् उभयोऽन्यत्रेति वार्त्तिके तयप् समानार्थकोऽप्ययज्गृह्यते उभयोर्मणिरुभये देवमनुष्या इति भाष्ये उदाहरणात् स्वार्थिकस्य च ग्रहणं तदुपक्रमेण वार्तिकप्रवृत्तेः एवं चावयवद्वयारब्धमणिद्वयविवक्षयोद्भूतावयवभेदविवक्षया चोभयशब्दस्य द्विवचनमसाधु ॥ अत एवोभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वेनाव्ययत्वं प्राप्तं परिगणनं क्रियते इति तद्धितश्चासर्वेति सूत्रे कैयट आचष्टे तदाह । कैयट इति । अनभिधानाद्भाष्ये उभयोर्मणिरुभये देवमनुष्या इत्यस्यैव दर्शनाच्चेति भावः । हरदत्त इति । अयञ्च पक्षो हेयः । उक्तभाष्यविरोधादिति । तत्र तयपोऽयजादेश इति मतं गृहीत्वाह । तस्मादिति । उभयशब्दादित्यर्थः ।

जसीति । अवयवारब्धसमुदायत्वाविवक्षायामित्यर्थः । अन्तरङ्ग- त्वादिति । अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवदिति न्यायादित्यर्थः । अयश्चोमाङ्कोश्चेत्याङ्ग्रहणेन ज्ञाप्यते तद्धि शिव आ इहीति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गयोः कार्यमन्तरङ्गमित्यन्तर- ङ्गत्वादाहुणे वृद्धिप्राप्तौ सत्या पररूपं यथा स्यादिति क्रियते यदि दीर्घ एव स्यात्तदा वृद्ध्यप्राप्तौ किं तेनेति सम्प्रसा- रणाच्चेत्यत्र षष्ठे भाष्ये स्पष्टम् । ननु सर्वार्थबोधकत्वरूपार्थस्यापे- क्षितत्वेन नित्यसंज्ञाया एव बहिरङ्गत्वमिति चेन्न । तस्य प्रथम- चरमेत्यस्याप्यपेक्षितत्वात् अन्यथोपसर्जनादौ प्रवृत्तिः स्यात् । ननु नोक्तपरिभाषाया इह विषयः युगपत्प्राप्त्यभावात् नित्यसञ्ज्ञाप्राति- पदिकसंज्ञासमकालमेव प्रवर्त्तते । अत एवोभय इत्यत्र सर्वनाम्नो विहितत्वेन शीभावसिद्धिः । वैकल्पिके तु नसनिमित्तं, किं चैवं न्यायेनैव सिद्धे वैकल्पिकीमाशंक्यायच्प्रत्ययान्तरेण साधयता भाष्यकृता सह विरोधापत्तिः । तद्यथोक्तं स्थानिवत्सूत्रे तयादेश उभयप्रतिषेध उभये देवमनुष्याः तयपोग्रहणेन ग्रहणाज्जसि विभाषा प्राप्नोति नैष दोषः । अयचप्रत्ययान्तरम् यद्येवमुभयीति ङीन्न प्राप्नोति माभूदेव कथ मात्राजातिप्रत्याहारग्रहणं मात्रशब्दात्प्र- भृति अयचश्चकारात् तर्हि कतीत्यत्रापि प्राप्नोति । अत इति वर्तते एवमपि तैलमात्रा अत्रापि प्राप्नोति महणस्याप्यसन्निविष्टस्य न भवति प्रत्याहारग्रहणेन ग्रहणमिति । त्रिश्च विभाषेति व्यवस्थित- विभाषाश्रयणेनापि सिद्धम् । न च भाष्योक्तातिरिक्तविभाषाया व्यवस्थितत्वमिन्द्रेचेति सूत्रेणाप्रामाणिकमित्युक्तमिति वाच्यम् ।

तयवादेशाय जयच्प्रत्ययान्तरयोः फलभेदायास्याः व्यवस्थितत्वस्य भगवता ध्वननादिति चेत्सत्यम् । नवीनानुरोधेन तथोक्तेरित्याहुः । सुप्तिङन्तमिति ज्ञापकादिति । तत्सूत्रे सुप्तिङितीत्युच्यमाने प्रातिपदिकादिना विशेषणत्वेन येन विधिरित्यनेनैव सिद्धेर्व्यर्थादन्तग्रहणाज्ज्ञापकादित्यर्थः । तेन प्रयोजनं सर्वनामव्ययसञ्ज्ञापका-दित्यर्थः । तेन प्रयोजनं सर्वनामाव्ययसञ्ज्ञायामिति येन विधिरित्यत्र भाष्योक्तवार्तिकेन डतरान्तं गृह्यते इति भावः । न च परमकतरशब्दे कथमिति चेत् प्रत्ययग्रहणे तदन्तग्रहणमिति परिभाषणात् डतरान्ते तु व्यपदेशिवद्भावेन बोध्यम् । तत्रैव मानान्तरमाह केवलयोरिति । प्रयोजनाभावात्फलाभावादित्यर्थः । प्रकृतिप्रत्ययोरन्यतरप्रयोगाभावादिति भावः । न च केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्यय इति समयात् । अयं च परश्चेति सूत्रेण ज्ञाप्यते तस्य वैयर्थ्यमुक्तं तृतीये प्रकृते भाष्ये किमर्थमिदमुच्यते परो यथा स्यात्पूर्वो मा भूदिति बहुचि पुरस्ताद्ग्रहणेन बहुजेव पूर्वो नान्य इति ज्ञाप्यते, मध्ये तर्हि मा भूदिति मध्येऽपि अव्ययसर्वनाम्नामिति प्राक्टेर्ग्रहणेन न भविष्यति । य इदानीमतोऽन्यः प्रत्ययः शेषः सोऽन्तरेण वचनं पर एव भविष्यति नार्थः परवचनेनेति । प्रत्ययविधौ सर्वविभक्तेः पञ्चमीकल्पनेन परः पूर्वो वेत्यनियमेनाध्याहारे प्रसक्ते पर एवेति नियमार्थमिदं सूत्रं तच्च तस्मादित्युत्तरस्येत्यनेन सिद्धमिति व्यर्थं तज्ज्ञापयतीति कय्यटे विस्पष्टम् । प्रकृतित्वं च प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तमन्यं ननु लिट् इयानित्यादौ दोष इति चेन्न । शास्त्रबोधितालयनप्रयो-

गविषये एवान्यस्य न्यायस्य प्रवृत्तेरिति दिक् । एतन्न्यायमूलक-मेवापदं न प्रयुञ्जीतेति पठ्यते । अपरिनिष्ठितमिति तदर्थः । परिनिष्ठितत्वं चाप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वमिति दिक् । ननु बहुव्रीहावन्यपदार्थस्य प्रधानत्वेन घटकपदार्थानां स्वार्थविशिष्टार्थान्तरबोधकत्वरूपोपसर्जनप्रतिषेधेनैव सञ्ज्ञाव्युदाससिद्धत्वाद्व्यर्थं सूत्रमित्याशंक्य बहुव्रीहाविति विषयसप्तमीत्वेन समासात्पूर्वं सञ्ज्ञानिषेधार्थं तत्सार्थकमित्याशयेनाह । त्वकमित्यादि । अज्ञाते कुत्सिते वाऽव्ययसर्वनाम्नामित्यकच् । प्रक्रियेति । अलौकिकविग्रहवाक्य इत्यर्थः तत्त्वं च लोके प्रयोगानर्हत्वम् । तच्च युष्मद् सु पितृ सु इत्याद्याकारम् । न चालौकिके समासप्रवृत्त्यैकार्थीभावस्यापि तत्रैव कल्पनादुपसर्जनादेव निषेधसिद्धौ सूत्रस्य वैयर्थ्यमेवेति वाच्यम् । तत्रैकार्थीभावस्यारोपेत्युक्तरूपोपसर्जनत्वाभावेनातिप्रवकानित्यत्रेव प्रासस्याकचोऽभावार्थं सञ्ज्ञानिषेध इत्यत्र सूत्रतात्पर्यात् । लौकिकेति । तत्त्वं च लोके प्रयोगार्हत्वम् । तदाकारस्तूक्त एव त्वकंपितृकेत्यादिः । ननु तत्रापि निषेधोऽस्तु मैवम् । लौकिके समासस्य चिकीर्षितत्वाभावात् । नन्वास्तामकच्को दोषस्तत्राह । श्रूयेतेति । न चाकृतव्यूहपरिभाषयाकचः समासे निवृत्तिः तस्यानित्यत्वात् । तत्र च ज्ञापकं चेदं सूत्रम् । लौकिकवाक्यसमासयोर्दृष्टान्तावाह । अतिक्रान्त इत्यादिना । एवं च भाषार्थं सूत्रमिति वृत्तिकारमतम् । सिद्धान्तमाह । भाष्यकारास्त्विति । ' अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ ' इति भाष्योक्तिः । द्विकपुत्रस्त्वकत्पितृक इत्याद्यनकारान्तेष्वकच्

विश्वप्रिय इत्याद्यदन्तेषु स्वाङ्गशिटामदन्तानामित्याद्युदात्तस्वर इति तदर्थः । ननु स्मृतिद्वयबलाद्विकल्पः स्यादित्यत्याख्यानं कथमत आह यथोत्तरमिति । तथा चेदानीं पातञ्जलोक्तव्यवस्थैव ज्याय-सीति भावः । ननु अविशेषात्सर्वनामसञ्ज्ञाया विधानात्सर्वत्र स्यादत आह । न सर्वादय इति । सर्वनामत्वाभावेन सर्वादिपाठा-भाव इत्यर्थः । अयं भावः सर्वनामेति महासंज्ञाकरणमन्वर्थ-सञ्ज्ञाविज्ञानार्थम् । सर्वेषां नामानीति । तद्बलात्सर्वाभिधानसाम-र्थ्यविशिष्टानामेव संज्ञित्वमनुमीयते । एवं च तथाभूतानां गणेऽनुकर-णावश्यकतया प्रकारान्तरीभूतानामनुकरणे प्रमाणाभावेनैव विशेषेऽ-वस्थितानां संज्ञानामुपसर्जनानां च सर्वादिपाठबहिर्भावः । एकद्रव्यो-पनिवेशिनी हि संज्ञा । इतरविशेषणेनार्थोपस्थापकत्वं चोपसर्ज-नत्वमित्युभयभूतानामन्वर्थसञ्ज्ञाननुरूपत्वात्सर्वनामत्वं नास्तीति तदाह । महासंज्ञेति । अन्यथाटि घुमादिवल्लघ्वक्षरसंज्ञैव क्रियेत । प्रातिपदिकसंज्ञा तु, आथर्वणश्रुत्यनुरोधादिति दिक् । एवं च प्रवृत्तिनिमित्तेन प्रयुक्ता इतरं प्रत्यनुपसर्जनीभूता एवेह संज्ञिनः । ननु कृत्स्नसकलादिशब्दानामतिप्रसंगोऽत आह । गणे इति । पञ्चत्रिंशात्मक इत्यर्थः । सन्निवेशादिति । तदनुमानादित्यर्थः । अन्वर्थसंज्ञायाः फलमाह । अत इत्यादिसंज्ञाप्रयुक्तं स्मायादिकम-न्तर्गणकार्यं तु अड्डतरादिभ्यस्त्यदादीनामस्तदोस्सावित्यादिक-मित्यर्थः । यच्च स्वरुपानाश्रयं कार्यं न तु गणपाठं संज्ञां वापेक्षते तद्भवत्येव प्रकारान्तरजुषाम् । यथा युष्मदस्मद्भ्यां ङसोश् इत्या-दिकम् । युष्मद्युपपदे समानाधिकरणे इत्यादौ तु न त्वसादिप्रसङ्गः ।

अभिव्यक्तपदार्था ये स्वतन्त्रा इति न्यायेन लोकप्रसिद्धार्थपरतायामेव त्वमादिप्रवृत्तेरिति दिक् । ननु वार्तिकरीत्या एकसंज्ञाधिकारे सर्वनामसंज्ञानन्तरमेकद्रव्योपनिवेशनी संज्ञेति संज्ञायां सर्वनामसंज्ञा बाधिष्यते । किंच पूर्वापरेति गणसूत्रेऽसंज्ञायामिति योगं विभज्य पूर्वोत्तरयोः शेषो व्याख्येयः । पूर्वादयो वक्ष्यमाणाश्चादयश्चासंज्ञायामिति । अपि च संज्ञाव्यावृत्तिर्गौणमुख्यन्यायेनापि सेत्स्यति तथोपसर्जनव्यावृत्तिरप्यन्यथैव तद्यथा अनुपसर्जनादिति सूत्रेऽनुपसर्जनेति लुप्तषष्ठीकं पदम् । अ आदिति च्छेदः । अश्च अश्च तयोः समाहार आत् । अकारात्पगव अदित्यादेशौ यत्र क्रियेते तत्रानुपसर्जनस्य ग्रहणमिति तदर्थः । तेनादड्डत्यदाद्यत्वं च गौणे न भवतीति सर्वं भाष्ये स्पष्टम् । तथा च महासंज्ञा विफलैवेति चेन्न । अतिसर्वायेत्यादिसाधनफलकत्वात् । ननु तदो सः साविति सूत्रेऽदस एव दस्य नान्यस्येति नियमे द्वीयतेरप्रत्यये द्व इति प्राप्नोति स्व इति चेष्यतेऽत्वसत्वयोर्गौणे वारणस्य सिद्धान्तितत्वादिति चेन्न। तस्यैकदेश्युक्तित्वेनादोषात्। अन्यथा प्रकृतसूत्रस्थानेकभाष्यविरोधं स्यादिति संक्षेपः ननु जराशब्दस्यादेशविधानान्निर्जरशब्दस्य कथमत आह । पदाङ्गेति ।' पदमङ्गं च विशेष्यं विशेषणेन तदन्तविधेर्लाभादिति भावः । इदं च येन विधिरिति सूत्रस्य प्रपञ्चभूतमेव न त्वपूर्वं वचनं सोपपदं स्यादिह निर्दिश्यमानस्येति । षष्ठी स्थाने योगेति सूत्रमावर्तते । तत्र द्वितीयस्यायमर्थः षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन स्थाननिरूपितसम्बन्धेन युज्यते न तु प्रतीयमानामिति तेनेयं परिभाषा निष्पन्ना । न

चास्य च्वावित्यत्राकारस्यैव निर्दिश्यमानत्वान्माली भवतीत्यादा-चादेशो न स्यादिति वच्यम् । तत्र जातिपक्षाश्रयणात् । न भूसुधियोरिति निषेधसामर्थ्येन ग्रहणकशास्त्रगृहीतानां निर्दिश्य-मानकार्थित्वबोधाच्च । नन्वियङुवङोर्ङित्त्वं व्यर्थं, निर्दिश्यमान-त्वेनैवान्त्यादेशस्य ङित्त्वं विनाप्युपपत्तेरिति चेन्न । धातोरपि निर्दिष्टत्वादन्त्यादेशत्वार्थन्तस्यावश्यकत्वात् । रीङ्रिङोर्ङित्त्वं तु स्पष्टार्थमिवेत्याधिकं नागेशीये । नन्वयं जरशब्दो न जराशब्दोऽत आह । एकदेशेति । एकदेशविकृतमनन्यवदिति न्यायशरीरम् । अनन्यवदित्यस्यान्यवन्नेत्यर्थः । तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतराम् । अत एव तादृशादर्थबोधः । अन्यथा शक्ततावच्छेदका-नुपूर्व्यज्ञानात्ततो बोध एव न स्यादिति शब्दकौस्तुभगुणे विवेचितमस्माभिः । इदं च प्राग्दीव्यत इत्यत्र चतुर्थे स्पष्टम् तद्यथा दीव्यत इति कोऽयं शब्दो दीव्यति शब्दैकदेशदीव्यच्छब्दानुकरणमिदम् किमर्थं विकृतनिर्देशः । एतदेवज्ञापयत्याचार्यो भवत्येषा परिभाषा एकदेशविकृतमन-न्यवदिति यत्र त्वर्द्धं तदधिकं वा विकृतं तत्र जातिव्यञ्जक-भूयोऽवयवदर्शनाभावे तत्त्वाप्रवृत्तौ कार्यसिद्ध्यर्थं विकृतानलरू-पावयवप्रतीत्यर्थं च स्थानिवत्सूत्रमिति दिक् । परत्वाज्जरसिति । जराया इति सूत्र निर्जरसावित्यादौ सावकाशम् । टाङसीत्या-दिकं तु रामेणेत्यादौ सावकाशम् । इत्यादिविषये विप्रतिषेधशास्त्र-प्राबल्याज्जरसादेश एव । वृत्तिकृतेति । इति केचिदित्युक्तमि-त्यन्वयः किमुक्तं तदाह । पूर्वविप्रतिषेधेनेत्यादि । विप्रतिषेध-

सूत्रे परशब्दः क्वचिदिष्टार्थवाची । इष्टश्चेनाद्यादेश एव स च नादेशे विधातव्य इकारदीर्घाकारौ क्वचिदपि स्वरूपश्रवणफलकौ विधत्तः सूत्रकृतः । समाजग्रस्त इति तदभिमानः । तर्हि सन्निपातपरिभाषया कथं जरसित्यत आह । अनित्यत्वमिति । अत्रापीकारदीर्घानुकरणमेव ज्ञापकमित्यभिमानः । तदनुसारिभिरिति । ये तु निर्जरसिनेत्यादि व्याचक्षते तेषां मतानुयायिभिरित्यर्थः । षष्ठ्येकवचने इति । एकसूत्रोपात्तत्वात्स्यादेशविषयेऽपि पूर्वविप्रतिषेधाश्रयणमिति तद्भावः । एतच्च भाष्य इति, इनातोरिकारदीर्घोच्चारणप्रत्याख्यानपरभाष्येत्यर्थः । जराया इति सूत्रे सप्तमे अष्टमे तत्संगृहीतम् निर्जरेति भवितव्यं सन्निपातपरिभाषयेति भाष्येति न्यायः । इत्थं हि प्रत्याख्यातम् । टाङसीतिसूत्रे नादेशोऽदादेशश्चास्तु । आङि चाप इति सूत्रे आङि चेति योगं विभज्य बहुवचने झलीत्यत एत्वमनुवर्त्याङि च परे एत्वं स्यादिति विभक्तेन सूत्रांशेन समीहितरूपसिद्धेः । न च नादेशे कृते हलि लोपप्रवृत्त्यानेनेत्येतन्न सिध्यतीति वाच्यम् । अनाप्यक इत्यत्राऽनापीति च्छित्त्वा नपुंसकात्सोर्लुकि नलोपेनापोः समाहारे सप्तम्येकवचनं नकारे परतो विशिष्यानादेशविधानसामर्थ्येन हलि लोपाप्रवृत्तेः । न च टसेरदादेशे पररूपापत्तिः । अकारोच्चारणसामर्थ्याद्दीर्घसम्भवादिति । अन्ये तु अयं भाष्यविरोधो निर्जसिनेत्यादिरूपांशेन तु पूर्वविप्रतिषेधात्तो जराया इति सूत्रे भाष्ये जरसादेशविभक्त्यादेशानामेव पूर्वविप्रतिषेधेनेष्टत्वात् । तद्यथा जरासीत्यत्र नुम्जसोः प्रसङ्गेऽपि विप्रतिषेधेन जरसिनि विभक्त्यादेशात्पूर्वं जरसः

प्रवृत्तौ तु शिभावात्पूर्वञ्जरसि कृते तदा सर्वनामस्थानत्वाभावा-न्नुमा विप्रतिषेधविचारसङ्गतिः किञ्च टाङसीति सूत्रे कैयटः भाष्य-कारस्सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नातिजरेणातिजरादिति भाष्यन्न तु अतिजरसि नातिजरसादिति गौरवमुद्भावितवानिति विभक्त्यादेशात्पूर्वञ्जरसादेशे तु इनाद्यप्राप्त्या सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नित्यस्यासङ्गतिरिति दिक् । तस्माद्भाष्येष्टेन पूर्वविप्रतिषेधेन विभक्त्यादेशे कृते ततस्सन्निपातपरिभाषाया अत्र भाष्ये संचारितया न जरसित्याहुः । तदपरे न क्षमन्ते विभक्तिस-ञ्ज्ञाद्यनपेक्षत्वेनान्तरङ्गत्वाज्जरसादेशं बाधित्वा शिभावे तस्य विप्रति-षेधविचारसंगतिः । अत एवातिजरसं पश्येत्यत्र संनिपातपरिभाषया लुग्वारणं भाष्ये संगच्छते । व्याख्यातञ्च कैयटेन । परत्वान्नित्यत्वा-च्चामुभावात्प्राग्जरसि कृतेऽनदन्तत्वादमोऽप्राप्त्या लुकः प्राप्तिरिति । इदन्तु न सत् संज्ञाकृतबहिरंगत्वस्यानाश्रयणाद् इति दर्शयिष्यते स्त्रीप्रत्यये शिभावस्यापि क्लीबत्वाद्याश्रयणाच्च । नन्वेकस्यैकैव संज्ञेति सूत्रबोधिते विशेषानवगतिस्तदाह । या परेति । द्वयोस्साव-काशयोः परैवैकस्यानिरवकाशत्वे तु निरवकाशैवेत्यर्थः । ननु संज्ञयैव संज्ञा बाध्यतां परत्वादिना कृतं सूत्रेणेति चेन्न । अधि-कारातिरिक्तस्थले तव्यदादौ कृत्कृत्यप्रत्ययसंज्ञादीनां समावेशदर्श-नेन विरोधाभावाद्विप्रतिषेधसूत्राप्रवृत्तेः । नन्वेवं विप्रतिषेधसूत्रा-प्रवृत्तौ कथमत्र परत्वादिवर्णनामिति चेन्नैवम् । परत्वादेरन्यत्र प्रबलत्वेन दृष्टतयात्रापि तादृशरीत्यैव व्यवस्थोपपत्तेः । न च राजन्य इत्यादौ सुप्तिङन्तमित्यनेन पदत्वं स्यादेव परया भसंज्ञया तु न

बाध्येत पदसंज्ञाया अन्तरङ्गत्वादिति शंक्यम् । समानावधिकाया अन्तरंगाया अप्यनया बाध्यसामान्यचिन्तयाऽपवादत्वेनैव बाधात् क्वचित् समानावधिकयोरपि संज्ञयोस्समावेशस्तु गमकबलादेवेति दिक् । तेनेति । अनवकाशत्वेनेत्यर्थः । पदसंज्ञायास्सर्वनामस्थानवर्जे हलजादिर्विषयः । भसंज्ञायास्त्वजादिरित्येतद्विषयेऽपि पदसंज्ञाप्रवृत्तौ भसंज्ञानिरवकाशैवेत्यभिप्रेत्याह । शसादावचीति । पूर्वस्मादिति । अचः परस्मिन्नित्यत्र पूर्वस्माद्विधिरिति पंचमीसमासस्याप्याश्रयणादयमर्थो लभ्यते इति भावः । इति पक्षे त्विति । तुनास्य पक्षस्यानित्यतावबोध्यते इत्यन्यत्र वक्तव्यम् । अड्व्यवाय इत्येवेति । अट्कुप्वाङित्यनेनैवेत्यर्थः । एवकारसाधकान्तराभावं व्यनक्ति । पूर्वत्रासिद्ध इति । इयञ्च परिभाषा न्यायसिद्धार्थानुवादिका । त्रिपाद्या असिद्धत्वेन तत्रत्ये कर्तव्येऽचः परस्मिन्नित्यतिदेशस्याप्रवृत्तेः । एतत्फलन्त्वतिदेशान्तराणां वत्यर्थघटितानां त्रिपाद्यामप्रवृत्तेर्बोधनम् । तेनामी क्षीरपेणेत्यादौ मीत्वणत्वे सिध्यतः । तत्रकारस्यादस्संबन्धित्वं ये इत्यस्यैकाजुत्तरपदत्वञ्चान्तवद्भावाधीनं तस्य दोष इति । इदं वाचनिकं न तु ज्ञापकसिद्धम् । न मुने इत्यत्र नेति योगविभागस्य भाष्येऽदर्शनेन तस्य ज्ञापकत्वाभावादित्याहुः । तस्य पूर्वत्रासिद्ध इत्यस्य दोषो बाधस्तथा च स्थलत्रये स्थानिवद्भावो वक्तव्य इति तदर्थः । ननु लाघवाच्छसादाविति वक्तव्ये यत्नाधिक्यं किमर्थमत आह प्रकारार्थमिति । प्रकारः सादृश्यं तच्च साधारणधर्मसम्बन्धप्रयोज्यम् । साधारणधर्मवत्त्वं चोपमानोपमेयोभयवृत्तित्वम् । उपमानत्वं

साधारणधर्मवत्त्वेनेषदितरपरिच्छेदकत्वम् उपमेयत्वमपि साधारणधर्मवत्त्वेनेषादितरपरिच्छेदकत्वम् तथा च स्वादौ शसादौ चोभयत्रापि सुप्त्वस्य साधरणधर्मस्य वृत्तित्वात्सुप्त्वेनैव सादृश्यम् तदध्वनयन्नाह । औङश्यामिति । तत्रैव मानमाह । भाष्ये इति । तत्र हि शस्प्रभृतिष्वित्युच्यतेऽशस्प्रभृतिष्वपि दृश्यते ककुद्दोषणी याचते महादेव इत्युक्तम् । अस्य भाष्यस्यापि सुप्त्वेनैव सादृश्यमित्यत्रैव स्वरसः । प्रायोज्यनञ्घटिते नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थावगतिरिति न्यायेन सदृशार्थावगमात् । तदुक्तं भाष्येऽब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशमानयति न हि कश्चन लोष्टमानीय कृती भवतीति । अन्यथान्यत्रापि दृश्यत इत्युच्येतेति सर्व संवादचिन्तामणौ व्यक्तम् । एवं च मांस्पचन्याः पदांघ्रिः हृन्मानसमित्येतषु न लुमताङ्गस्येत्यस्यानित्यत्वेन स्वादिपरत्वं बोध्यम् । एतेन शब्दत्वेन प्रत्ययत्वेन वा सादृश्यमिति केषांचिदुक्तिरपास्ता । वा शोकष्यञ् रोगेष्वित्यस्य वैयर्थ्यापत्तेः । अत्र सुप्रभृतिष्विति वाच्ये शस्प्रभृतिष्वित्युक्त्याऽन्यत्र क्वचिदेव प्रवृत्तिर्बोध्यतेऽत एव यत् हृन्निशां ग्रहणं चरितार्थम् । तेषां द्विविधानामपि कोशसिद्धतया तत्र तृज्वत्क्रोष्टुरित्यत्रेव व्यवस्थार्थताया एव वक्तव्यतया सुब्मात्रे प्रवृत्तौ तस्या असंभवेन तद्वैयर्थ्यमेव स्यादिति दिक् । काशिकायाः ग्रामादिकत्वमुक्तं ध्वनयन्विवृणोति । आस्ये भवमिति । शरीरावयाद्यत् । तथा च श्रुतिः " आस्नो वृकस्य वर्तिकाम् " इत्यादि । तत्र वृकस्य आस्नो मुखादित्येव निरुक्तार्थात् ॥ अत एवेति । ककुद्दोषणी इति प्रयोगादेवेत्यर्थः ।

यद्यपि ककुच्च दोषश्चेति समाहारद्वन्द्वे एकशेषे च कृते भाष्यमन्यथोपपन्नं दोषशब्दस्य नपुंसकत्वं प्राप्नोति । तथापि ककुच्छब्दस्य पृथक्पदत्वं युक्तम् । अन्यथा बाह्वोर्द्वित्वे लब्धेऽपि ककुदित्यस्यैकत्वं न लभ्येतेत्याशयः। तेन तमुपाद्रवदुद्यम्य दक्षिण दोर्निशाचर इति रघुकाव्यमनुगृहीतं भवति । तत्र दक्षिणं दोर्बाहुमुद्यम्य तद्भवमुपाद्रवादिति सम्बन्धः । साहचर्यादिति । पुँल्लिंगादिनिर्णायकं साहचर्यादिकमपि स्वसंकेतेनोक्तममरसिंहेन प्रायशो रूपभेदेनेत्यादिनेति भावः दोषमिति । ' दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुणम् ' इति नैषधः । दोषं हस्तं दूषणं च भजतश्चापस्येति संबंधः । ननु दीर्घाच्छसीति सूत्रयता प्रथमयोः पूर्वसवर्ण इत्यनेन सिद्धेर्दीर्घाच्छस्यैव पूर्वसवर्णदीर्घ इत्यर्थके नियमे नादिचीत्यत इचीत्यपकर्षणार्थश्चकारोऽनुवर्तितनकारश्च नाश्रयणीयः । किंच शस्यप्यातो धातोरित्यस्यैवेह प्रवृत्तेरत्रानुपयुक्त चेदं सूत्रमिति ध्वनयन्नाह । यद्यपीत्यादि । उक्तं नियमफलं दर्शयति । गौर्यौ गौर्य इति । इत्याद्यर्थमिति । नियमत्वेन पूर्वसवर्णदीर्घव्यावृत्यर्थमित्यर्थः । न्याय्यत्वादिति । विश्वपाशब्दोऽपि शसि प्रवृत्तियोग्यत्वादित्यर्थ इत्याहुः । यद्यपि क्त्वोल्यप् श्वश्शानज्ञावित्यादिसूत्रगत सौत्रत्वादेव निर्वोढुं शक्यते तथापि क्त्वोल्यप् भवति श्वशनानज्ञप्रतीति व्याख्यानवाक्यस्थन्तत्साधयितुं वार्तिककृता आतोऽनाप इति वक्तव्यमित्यारब्धं तच्च भाष्ये प्रत्याख्यातं योगविभागेन तदाह आत इति । एवञ्च भाष्यवार्तिककृता एव निर्णयोक्त आकारस्सर्वोऽपि लोपविषय इति स्वरसः ।

तर्हि धातुग्रहणं व्यर्थमत इतीयतैव सिद्धेरिति चेन्न । आबन्त-व्यावृत्तिफलकत्वात् । एवञ्च धातोः किं हाहान् अव्युत्पन्नमिदम् । यदिहेति कष्टे जहातीति क्रियाशब्दस्तदा अकारो वासुदेवस्तेन सह वर्तते सास्तान् सानित्यत्र लोपस्यादतो 'धातुग्रहणमित्युक्ति-रसमाजग्रस्ता अव्युत्पन्ने हाहाशब्दाद्वौ प्रमाणीभूताभिधाने साशब्दाद्वौ वा लोपस्य भाष्यवार्तिकयोरिष्टत्वात् । एतेनाचारक्वि-बन्तात्कर्तृक्विपेते प्रयोगा निर्वाह्या इत्यपास्तम् । आचारक्विबन्तस्य भाष्ये काप्यनुपन्यासेनादन्तेभ्यः कर्तृक्विपोऽनभिधानस्यैव लाभा-च्चेति दिक् । शेषः किमिति । पूर्ववर्तिना यूस्त्र्याख्यावित्यनेन नित्यस्त्रीलिङ्गयोर्दीर्घे यूदन्तयोर्नदीसञ्ज्ञाविधानात् । ङिति ह्रस्व-श्चेत्यनेन च दीर्घे यूदन्तयोस्त्रीलिङ्गयोर्ह्रस्वे यूदन्तयोर्विकल्पेन नदी-सञ्ज्ञाविधानात् । घ्यसखीत्यपि यूह्रस्वपदे अनुवर्त्य तत्रैव सामान्यतो घिसंज्ञाविधानेन समीहितरूपासिद्धेः शेषपदं व्यर्थमिति प्रष्टुरभिप्रायः । मत्यै इति । नदीत्वपक्षेऽपि घित्वे सत्याण् नद्या इत्याडागमे घेर्ङितीति गुणेऽवादेशे च मतये इत्यनिष्टमापद्येतेत्यु-भावः । वस्तुतः पुन्नपुंसकयोः प्राप्तौ सावकाशां घिसंज्ञां बाधित्वा मत्यै इत्यत्रानवकाशत्वान्नदीसंज्ञैव भविष्यतीति व्यर्थं शेषग्रहण-मित्याशयेनाह एकेति । अधिकारादिति । कडाराः कर्मधारये इत्येतत्पर्यन्तमधिकारस्य बुद्धिस्थत्वादित्यर्थः । नन्वेवं पुरुषपर-स्मैपदसंज्ञयोरेकत्र समावेशः कथम् । कथञ्च गुरुनदीत्वयोर्लघु-घिसंज्ञयोरिति चेन्न । णलुत्तमो वेति ज्ञापकादेव समाधानात् । अंत्ये च गुरुलघुसंज्ञे वर्णस्य नदीघिसंज्ञे तदन्तस्येति भिन्नावधि-

क्त्वात्समावेशादिति दिक् । स्पष्टार्थमिति । स्पष्टतया तदन्तविधिलाभार्थमिति भावः । यू किमिति । ह्रस्व इत्यनुवृत्त्या निर्देशज्ञापकादिनेष्टप्रतिपत्तावपि विशेष्येणेदुतोरप्यनुवृत्तौ किंफलमिति प्रश्नः । मात्रे इति । अत्र घित्वे घेर्ङितीति गुणः स्यादिति घित्वनिवृत्तिः फलम् । ननु ऋतो ङीति गुणेन व्यर्थेन ऋदन्ते घिसंज्ञाभावज्ञापनेनात्र दोषाभावस्तस्मात्परिच्छेत्तृवाचिनो मातृशब्दस्य टाविभक्तौ घित्वे सति आङो नेति नात्वापत्त्या मात्रेति प्रत्युदाहर्त्तव्यमिति चेन्न । ऋतो ङीत्यस्य यू इत्यनुवृत्तावेव तात्पर्यग्रहफलकत्वान्मुक्तेर्युक्तत्वात् । ननु यू स्त्र्याख्यावित्यत्रैव यूग्रहणं न कर्त्तव्यं ङेराम् नद्याम् ह्रस्वनद्याप इति ज्ञापकेन नेयङुवङ्स्थानेति नदीत्वनिषेधे इयङुवङ्स्थानत्वेनाचिश्नु इत्यत्र य्वोरेव प्रसिद्धत्वेन चेदूदन्तोरेव स्त्र्याख्यनदीत्येतावता सूत्रेण सिद्धस्तत्कथमत्रानुवृत्तिरिति चेन्न । अनेकगौरवापत्तेः । ननु दीर्घयोर्यू इति निर्देशासंगत्या ह्रस्वयोर्ग्रहणमस्तु दीर्घयोस्तु ग्राहकत्वात् सिद्धेः । न चाणुदिदित्यत्राशब्दसंज्ञेत्यनुवृत्तिरन्यथोकालसूत्रे ग्राहकतापत्तिः । नेयङुवङित्यत्र निषेधपर्युदासाभ्यां सवर्णग्रहणस्य ज्ञापनात् । तदुक्तं भाष्येऽविशेषणनदीसंज्ञा उत्सर्गस्तस्या ह्रस्वयोर्विसंज्ञापवाद इति स्त्र्याख्यस्य ह्रस्वदीर्घौ सञ्ज्ञा तु वाव्यत्वलक्षणमादश्यादुत्सर्ग इति व्यवहार इति चेन्न । अनेकक्लेशकल्पनापेक्षया दीर्घयोरेव निर्देश इति पक्षस्यैव सुकरत्वात् छन्दोवत्सूत्राणीति भाष्योक्तेर्निर्देशोपपत्तिः । ननु यू इति किमर्थमित्याशंक्य मात्रे मातुरित्यादावाण् नद्या इत्यादि प्रसज्येतेति भाष्यो-

त्क्रमंसंगतं नद्यृतश्चेति ऋग्रहणेन ऋदन्तानां नदीत्वाभावबोध-
नादिति चेन्मैवम् । अन्यर्थं बहुपितृक इत्यादौ कप्फलत्वादि-
त्याहुः । ननु घेर्ङीत्येवास्तु । यस्मिन् विधिस्तदादाविति परिभा-
षया ङकारादौ सुपीत्यर्थेन सकललक्ष्यानिर्बाधत्वात् । न चाङ्या-
जरायामुपसंख्यानमिति वार्तिकेनाङादेशे ङादित्वाभावेन
गुणाप्रवृत्तेः प्रवाह वेति रूपासिद्धिरिति वाच्यम् तत्रापि ङादेशस्यैव
विधेयत्वादिति चेन्मैवम् । अण् नद्या इत्यत्रापि ङीत्यस्यानुवृ-
त्तावल्विधित्वेन स्थानिवद्भावाप्रवृत्त्या मत्यामित्यादावाडागमा-
नापत्तेः । ङ्ग्रहणे तु अनुबन्धकार्यत्वात्स्थानिवद्भावः सुलभ
इति स्त्रीप्रत्यये स्फुटीभविष्यति । ननु सुतरांसखेति विग्रहीते
राजाहः सखिभ्य इति टचा भाव्यमित्याशंक्य न पूजनादिति
निषेधप्रवृत्तये विवृणोति शोभनः सखा सुसखेति । एवमतिशयि-
तसखेत्यत्रापि बोध्यम् । ननु सखिशब्दस्य विहितं कार्यं कथ-
मत्र स्यादत आह आङ्गत्वादिति । तत्तत्कार्यस्याङ्गाधिकारस्थत्वे-
नाधिकृतमंगं प्रति सख्युर्विशेषणाद्येन विधिरिति प्रवृत्तेस्तदन्त-
लाभादिति भावः । सखेत्यादौ व्यपदेशिवद्भावेन बोध्यम् शेषो
ध्यसखीत्यत्र नञ् न प्रसज्यप्रतिषेधकोऽसमर्थसमासादिति दोषात्
किन्तु पर्युदासकः स च सदृशग्राही । सखीसदृशश्च समुदायो
नास्तीत्यभिप्रेत्याह समुदायस्येति । ननु पर्युदस्यमानसमर्पक-
सखिशब्दे तदन्तग्रहे समुदायस्यापि सखिशब्दान्तभिन्नत्वाभावेन
कथमत्र निषेधाभाव इति चेन्मैवम् । विशेष्यासन्निधानेन येन
विधिरित्यस्याप्रवृत्तेस्तदन्तालाभात् । सत्यपि विशेष्ये सखिश-

त्वदभिन्नान्तस्येत्येवार्थो न तु सख्यन्ताभिन्नस्येति । नन्वैकार्थीभावापन्नस्य सखिशब्दस्यान्यत्रान्वयायोगात् । यस्येति चेति सूत्रे भाष्यकारस्त्वत्रापि असखीति घिसंज्ञानिषेधमभिप्रैति । तद्यथा । इवर्णस्य किमुदाहरणमतिसखेरागच्छति । यद्यत्र लोपो न स्यात्तदा प्रकृतीकारस्य ङीपा सह दीर्घे पूर्वान्तवद्भावेन सखिशब्दत्वादुपजर्सनह्रस्वत्वे कृतेऽपि घिसंज्ञा न स्यात् लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोषो भवतीति । सखिशब्दस्य तदवयवे लक्षणा ततश्च सख्यवयवभिन्नयोरिदुतोरिति वर्णसंज्ञापक्षे तत्सूत्रार्थः । इउवर्णान्तसंज्ञापक्षेऽप्यसखीति य्वोरेव विशेषणं ततस्तदन्तविधिः । ततश्च सख्यवयवभिन्नेवर्णोवर्णान्तमिति तदर्थः । एवञ्च प्रकृतेन घिसंज्ञेति भावो भाष्यकर्तुः । पूर्वरीत्या तु विशिष्टस्य सखिभिन्नत्वेन घिसंज्ञा निर्बाधैवेति भाष्यासंगतिरेवेति दिगित्याहुरन्ये । एतेन शेषो घ्यसखि पती पतिसखी समास एवेति वा सूच्यतामिति परास्तम् । उक्तभाष्यरीत्या सुसख्येत्यादीष्टासिध्या तथान्यासस्य कर्तुमशक्यत्वात् । इह पतिना सखिनेत्यादिपुराणादौ दृष्टं त्वसाध्वेवैतद्व्याकरणानिष्पन्नत्वात् । ननु परमश्चासौ सखा चेति विग्रहे न पूजनादित्यस्याप्रवृत्तेष्टच् स्यादित्यत आह यस्येति विग्रह इति । नन्वेवं सत्युपार्जनत्वं तच्चेतरविशेषणत्वेनार्थोपस्थापकत्वमित्युक्तं तत्कथं तत्कार्यमित्याशंक्य बाधकवचनाभावादविशेषाद्भविष्यतीत्याह । गौणत्वेपीति । उपसर्जनत्वेऽप्यस्थ्याद्यनङ्वादित्यर्थः । न च गौणमुख्ययोरिति बाधकम् । अत्र गौणत्वाभावात् अप्रसिद्धलाक्षणिकत्वान्यतररूपत्वस्यैव तत्त्वात् गौणे-

पसर्जयोः पर्यायत्वेऽपि न्यायेनैव सिद्धे उपसर्जनानां सर्वनामत्वनिषेधपरवार्तिकभाष्यादयो विरुध्येरन् न्यायस्य पदकार्ये प्रवृत्तेश्चेति दिक् । सखीशब्दे सख्यशिश्वीति भाषायामिति ङीषन्तेऽपि लिङ्गविशिष्टपरिभाषया सखिकार्यमाशंक्याह । अनित्यत्वादिति । शक्तिलांगलांकुशेति वार्तिके घटघटीग्रहणमत्र लिङ्गम् । उपसर्जनेऽप्युक्तं कार्यमाशंक्याह । इहेति । लाक्षणिकत्वादिति । लाक्षणिकस्यानुमीयमानरूपत्वात्प्रतिपदोक्तस्य प्रत्यक्षत्वादिति परिभाषाबीजम् । ननु बाधकाभावादविशेषादुपसर्जने त्रयादेशः स्यादत आह । गौणत्वे तु नेतीति । उपसर्जने तु नेत्यर्थो यथानन्तरोक्तस्यामि सर्वनाम्न इत्यस्यानुपसर्जने एव प्रवृत्तिस्तद्वत्तत्साहचर्यादस्यापीति भावः । केचिदिति । अत्रारुचिबीजन्तु साहचर्यस्यासार्वत्रिकत्वं सूत्रान्तरस्थतदाश्रयणे दृढतरप्रमाणाभावश्चेति अत एवाह वस्तुत इति । गौणमुख्यन्यायस्यात्र प्रवृत्तौ समनन्तरोक्तसमाधिरनुसंधेयः । षड्भ्यो लुक् षट् चतुर्भ्यश्चेतिवदर्थप्राधान्यबोधकबहुवचनस्यात्राभावाद्गौणेऽपि त्रयादेशो न्याय्य इत्यादिकं संगतमिति हलन्ते वक्ष्यते । ननु सूत्रेऽयङ् इत्येवास्तु मैवम् । अयङ्यीत्यादाविवोच्चारणार्थत्वशंकावारणफलकत्वात् । एतेन तत्करोतीति णिचि प्रकृत्यैकाजिति टिलोपाभावे तु कित्रित् तस्य त्रयाणामिति साधनार्थं त्रयादेशः । नच तु कित्रिशब्दो नास्ति नच यदागमा इत्यस्य प्राप्तिर्ह्रस्वमात्रस्यागमत्वादिति वाच्यम् । अवयवावयवोऽपि समुदायावयव इति स्वीकारादिति मन्दोक्तमपास्तम् । सत्यभिधाने निर्दिश्यमानपरिभाषया

त्वदुक्तरूपस्यैवासंगतेः । यदागमा इति लभ्यस्यार्थस्य स्थानित्वा-भावो येन विधिरिति बोधिततदन्तस्य च निर्दिश्यमानपरिभाषया क्रियते तेन उदस्स्थादित्यत्र पूर्वसवर्णो न सुपद इत्यादौ पाद इत्यंस्य पदादेश इति सिद्धान्तात् । किञ्चात्र तु कियदागमा इत्यस्य कुतो न प्रवृत्तिः प्रणिदापयतीत्यादौ दापेः कथं घुत्वमित्या-शंक्य यदागमा इत्यनेन भविष्यतीति दाधेतिसूत्रे भाष्योक्तेश्चितो-ऽपि तुल्यत्वात् । प्रनिदारयतीत्यत्र रेफोदाग्रहणेन न गृह्यते आकारस्य तदागमित्वेऽपि दा इत्यस्य तत्त्वाभावादिति स्पष्टमाकरे । अवयवावयवः समुदायावयवोऽपीति त्वपसिद्धान्तः तत्साध्यार्थस्या-न्यथैवोपपत्तेरित्ति दिक् । यद्यपि निजां त्रयाणामिति निर्देशेन त्रयादेशस्य सान्तत्वाभाववदुच्चारणार्थत्वशंकाभावोऽपि शक्यते वक्तुन्तथापि लाघवाभावात् त्रेरयङ् न कृत इति तत्त्वम् । द्विपर्य-न्तानां किमिति । युष्मदस्मदोरात्वयत्वलोपैर्विशेषविहितैरत्वस्य बाधात्किमः कादेशविधानाच्च न दोष इति प्रश्नः । भावानिति भवंस्तु इति स्थिते तकारस्यात्वे अतो गुणे इति पररूपे उगिदचामिति नुमि सर्वनामस्थान इति दीर्घे सुलोपे नलोपे च भवा इति स्यादिति भावः । उत्तरे दत्तेऽपि दार्ढ्याय पुनराह भवन्ताविति । पूर्ववदत्वे पररूपे नुमि दीर्घे च भवानाविति स्यादिति भावः । नन्च रामाणामित्यवकाशयोरड्नुटोर्युगपद्बहुश्रेयस्यामित्यत्र प्राप्तौ विप्रतिषेधसूत्रप्रवृत्तेराह । इह परत्वादिति । ननु तावदाडामोः प्राप्तावनवकाशत्वादाटं बाधित्वाम्भवति । न चागमादे-शयोर्बाध्यबाधकभावो न दृष्टचरः । दीर्घोऽकित इत्यत्रापवादो

नुग्दीर्घत्वस्येति भाष्योक्तेर्दृष्टत्वात् । एवञ्च बाधितत्वे न पुनरप्रवृत्तेराटः कथं नुटा विप्रतिषेधविचार इति चेन्मैवम् । अपवादेन विनिर्मुक्ते पुनरुत्सर्गः प्रवर्तत इत्यदोषात् तौ सदित्यादिनिर्देशात् अत एव च गण इति सूत्रेणेत्वन्नापवाद-त्वाद्धलादिश्शेषं बाधते किं तर्ह्यनवकाशत्वादिति गुणो यङ्लुको-रित्यत्रोक्तं भाष्ये । नन्वेवमपि शब्दान्तरस्य प्राप्नुवन्विधिरनित्य इत्यनित्ययोराडासोः परत्वादामिति पादः पदित्यत्र भाष्योक्ति विरुध्येतेति चेन्न । तस्यैकदेशित्वोक्तेः परत्वादुत्कृष्टत्वादपवाद-त्वादित्यर्थेनादोषाच्च । आटा नुडिति । ननु ङेरामो लाक्षणिकत्वा-न्नुटोरप्राप्तिरेवेति चेन्न । अत्र नुट्प्रवर्तकभाष्यप्रामाण्येन तदना-श्रयणात् ननु तर्हि षष्ठीबहुवचनस्यामो ग्रहणमिति ह्रस्वनद्याप इत्यत्र साप्तमिकभाष्योक्तिरेव कथमिति चेत् इत्थम् । आटामिनुटो बाधित-त्वेन तस्यैवामः पर्यवसानात् । नचाटि कृतेऽपि पुनर्नुट् प्रवर्तताम् । सकृद्गतिन्यायस्यात्र लक्ष्यानुरोधेनाश्रयणात् । नन्वाण्नद्या इति सूत्रेऽट इत्येवास्तु आटश्चेत्यत्रापि न माङ्योगे इति सूत्रभाष्येऽ-टश्चेत्येवं सूत्रितमाडजादीनामित्यपि सूत्रमनादेयमटैव सिद्धत्वादि-त्यपरमनुकूलम् । न चाटिकृते अतोगुण इतिपररूपापत्तिः विधा-नसामर्थ्यादिति चेन्न । अटश्चेति न्यासे दोषाभावेऽप्यत्र त्वट्क-रणेऽटश्चेति वृद्ध्यवचनापत्तेः । अस्वपोहसान्नित्यत्र वृद्धिनिवारणाय तत्र उपसर्गादृतीत्यतो धाताविव्यपकर्षादिति स्पष्टं न माङ्योग इत्यत्र षष्ठे भाष्ये । नच वृद्धिरेचीति वृद्धाविष्ट-सिद्धिः । बहुश्रेयसी अ ए इत्यास्थिते पररूपापत्तेः ।

त्वदुक्तरूपस्यैवासंगतेः । यदागमा इति लभ्यस्यार्थस्य स्थानित्वाभावो येन विधिरिति बोधिततदन्तस्य च निर्दिश्यमानपरिभाषया क्रियते तेन उदस्स्थादित्यत्र पूर्वसवर्णो न सुपद इत्यादौ पाद इत्यस्य पदादेश इति सिद्धान्तात् । किश्चात्र तु कियदागमा इत्यस्य कुतो न प्रवृत्तिः प्रणिदापयतीत्यादौ दापेः कथं घुत्वमित्याशंक्य यदागमा इत्यनेन भविष्यतीति दाधेतिसूत्रे भाष्योक्तेस्त्वितोऽपि तुल्यत्वात् । प्रनिदारयतीत्यत्र रेफोदाग्रहणेन न गृह्यते आकारस्य तदागमित्वेऽपि दा इत्यस्य तत्त्वाभावादिति स्पष्टमाकरे । अवयवावयवः समुदायावयवोऽपीति त्वपसिद्धान्तः तत्साध्यार्थस्यान्यथैवोपपत्तेरित्ति दिक् । यद्यपि निजा त्रयाणामिति निर्देशेन त्रयादेशस्य सान्तत्वाभाववदुच्चारणार्थत्वशंकाभावोऽपि शक्यते वक्तुन्तथापि लाघवाभावात् नेरयङ् न कृत इति तत्त्वम् । द्विपर्यन्ताना किमिति । युष्मदस्मदोरात्वयत्वलोपैर्विशेपविहितैरत्वस्य बाधात्किमः कादेशविधानाच्च न दोप इति प्रश्नः । भावानिति भवत्तु इति स्थिते तकारस्यात्वे अतो गुणे इति पररूपे उगिदचामिति नुमि सर्वनामस्थान इति दीर्घे सुलोपे नलोपे च भवा इति स्यादिति भावः । उत्तरे दत्तेऽपि दाढर्याय पुनराह भवन्तावीति । पूर्ववदत्वे पररूपे नुमि दीर्घे च भवानावीति स्यादिति भावः । नद्य रामाणामित्यवकाशयोराड्नुटोर्युगपद्ब्रहुश्रेयस्यामित्यत्र प्राप्तौ विप्रतिपेधसत्रप्रवृत्तेराह । इह परत्वादिति । ननु तावदाडामोः प्राप्तावनवकाशत्वादाटं बाधित्वाम्भवति । न चागमादेशयोर्बाध्यबाधकभावो न दृष्टचरः । दीर्घाज्जसि इत्यत्रापवादो

नुग्दीर्घत्वस्येति भाष्योक्तेर्दृष्टत्वात् । एवञ्च बाधितत्वे न पुनरप्रवृत्तेराटः कथं नुटा विप्रतिषेधविचार इति चेन्मैवम् । अपवादेन विनिर्मुक्ते पुनरुत्सर्गः प्रवर्तत इत्यदोषात् तौ सदित्यादिनिर्देशात् अत एव च गण इति सूत्रेणेत्वन्नापवाद-त्वाद्धलादिश्शेषं बाधते किं तर्ह्यनवकाशत्वादिति गुणो यङ्लुको-रित्यत्रोक्तं भाष्ये । नन्वेवमपि शब्दान्तरस्य प्राप्नुवन्विधिरनित्य इत्यनित्ययोराडामोः परत्वादामिति पादः पदित्यत्र भाष्योक्तं विरुध्येतेति चेन्न । तस्यैकदेशित्वोक्तेः परत्वादुत्कृष्टत्वादपवाद-त्वादित्यर्थेनादोषाच्च । आटा नुडिति । ननु ङेरामो लाक्षणिकत्वा-न्नुटोऽप्राप्तिरेवेति चेन्न । अत्र नुट्प्रवर्तकभाष्यप्रामाण्येन तदना-श्रयणात् ननु तर्हि षष्ठीबहुवचनस्यामो ग्रहणमिति ह्रस्वनद्याप इत्यत्र साप्तमिकभाष्योक्तिरेव कथमिति चेत् इत्थम् । आटामिनुटो बाधित-त्वेन तस्यैवामः पर्यवसानात् । नचाटि कृतेऽपि पुनर्नुट् प्रवर्तताम् । सकृद्गतिन्यायस्यात्र लक्ष्यानुरोधेनाश्रयणात् । नन्वाण्नद्या इति सूत्रेऽट इत्येवास्तु आटश्चेत्यत्रापि न माङ्योगे इति सूत्रभाष्येऽ-टश्चेत्येवं सूत्रितमाडजादीनामित्यपि सूत्रमनादेयमटैव सिद्धत्वादि-त्यपरमनुकूलम् । न चाटिकृते अतोगुण इतिपररूपापत्तिः विधा-नसामर्थ्यादिति चेन्न । अटश्चेति न्यासे दोषाभावेऽप्यत्र त्वट्क-रणेऽटश्चेति वृद्ध्यचनापत्तेः । अस्वपोहसन्नित्यत्र वृद्धिनिवारणाय तत्र उपसर्गादृतीत्यतो धाताविपकर्षादिति स्पष्टं न माङ्योग इत्यत्र षष्ठे भाष्ये । नच वृद्धिरेचीति वृद्धाविष्ट-सिद्धिः । बहुश्रेयसी अ ए इत्यास्थिते पररूपापत्तेः ।

नच विधानसामर्थ्यम् बहुश्रेयस्यामित्यादौ नुटो निवारणेन चारितार्थ्यात् । ननु ह्रस्वनद्याप इत्यनन्तरं ङेर्नेति सूत्रयित्वामीत्यनुवर्त्य ङेरामो नुड् नेत्यर्थान्न दोष इति चेन्न । वचनारंभे गौरवादनाकराच्च । एतेन श्रियै श्रिया इत्यादौ सावेकाचस्तृतीयादिर्विभक्तिरित्यनेन विभक्तेरुदात्तत्वं माभूदागमानुदात्तत्वं यथा स्यादित्यङ्विधानस्य चारितार्थत्वात्पररूपं स्यादेवेति मन्दोक्तमपास्तम् । अटि सत्यप्येकादेशेन विभक्तेरेवोदात्तत्वस्य जायमानत्वादडभावपक्षेण तुल्यत्वात् । किञ्च यथान्यासेऽप्याटोऽनुदात्तत्वेन फलम् । आगमा अविद्यमानवद्भवन्तीत्यविद्यमानवत्त्वेन सावेकाच इति कृते एकादेशे नोदात्तत्वस्यैव श्रुतेः । अनेकाचशब्दे सुप्तेनाद्युदात्तश्चेति बाधित्वा विभक्तेरेवानुदात्तत्वश्रुतेश्च । अत एवागमा अनुदात्ता भवन्तीत्युक्ताः के पुनरागमा अनुदात्ता इति प्रश्नो आडनुदात्तोक्तो भगवता नच व्याख्यातृभिरुपात्तः स्पष्टं चेदमाद्युदात्तश्चेत्यत्र तृतीये भाष्ये इति दिक् । तस्मादनेकक्लेशकल्पनागौरवापेक्षया यथान्यासमेव युक्तमित्यलमियता । यदि गतिकारकपूर्वस्य यणित्युच्येत तदा कुमार्यावित्यादावव्याप्तिरतो भाष्ये गतिकारकपूर्वस्यैवेति नियमघटितं पठितं तेन गतिकारकपूर्वभिन्नस्य न यणिति फलति तद्भिन्नं च तत्सदृशं पूर्वपदमेवेत्युक्तेर्नाव्याप्तिः । यत् किंचित्पूर्वस्य चेत्तदागतिकारकपूर्वस्यैवेतरत्र तु नियमानन्तर्गतत्वाद्भवत्येवेति फलितार्थोत्तदाह । गतीति । कारकाणि कर्तृकर्मकरणसंप्रदानापादानाधिकरणरूपाणि षट् । क्रियाजनकत्वं च कारकत्वं, विभक्तिर्द्वेधा कारकविभक्तिरुपपदविभक्तिश्चेति । आद्या क्रियायोग एव ।

अन्त्या तदभावेऽपि । तथा च प्रथमान्तस्य क्रियानपेक्षत्वान्न कारकत्वमित्यभिमानेनाह । शुद्धधियावित्यादि । शुद्धा धीर्ययोः परमा धीर्ययोरिति विग्रहः । शुद्धं ध्यायतीत्यर्थे तु यणेवेति भावः। वस्तुगत्याऽस्तिर्भवतिपरोऽप्रयुज्यमानोऽप्यस्तीति भाष्योक्तेरस्तिक्रियायाः सर्वत्र सत्त्वात्प्रथमाया अपि कारकविभक्तित्वमायाति, प्रकृते त्वयं परिहारः । यद्यपि सत्त्वभूतार्थकधीशब्दस्य विशेषणत्वाच्छुद्धस्यासत्वभूतक्रियाविरहाच्चेह कारकत्वं नास्ति तथापि प्रतीयमानामास्तिक्रियामपेक्ष्य तत्त्वमस्त्येवेतरथासुवेव न स्यात् अत एव दध्योदनादावुपसेचनाक्रियामन्तर्भूतामूरीकृत्य कृतः समासः कैयटादिभिः । अत्र यण् तु न शंकनीयः । दुर्धिय इत्यादाविव प्रत्यासत्त्यायां क्रियामाश्रित्य सुबुत्पत्तिस्तां प्रत्येवकारकत्वमिति विवेचनादिति । एवञ्च सत्त्वभूतार्थकधीशब्दविशेषणत्वाच्छुद्धस्य कथमपि न कारकत्वमिति भट्टोक्तेरभिमान एवेति सर्वसंवादचिन्तामणौ विस्तरेण निरूपितमस्माभिः । दुध्र्यायति, दुष्टा धीर्ध्यानं येषां, वृश्चिकाद्धीर्येषामिति विग्रहमभिप्रेयन्पर्यनुयंक्ते । कथं तर्हीति । दुःस्थितेति प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपश्चेति वार्त्तिकेन स्थितपदादेर्लोपः । दुःशब्दोपात्तदुष्टत्वस्य स्थितिक्रियाविशेषणत्वमिति भावः । नन्वेवंरीत्या प्रध्यमित्यादौ भाष्योक्ते यणनापत्तिर्मैवम् । प्रकर्षः प्रशब्दार्थो धीशब्दोपात्तधात्वर्थे विशेषणमित्याशयात् । यत्क्रियेति । या चासौ क्रिया चेति विग्रहः । तं प्रतीति । तद्वाचकं धातुं प्रतीत्यर्थः । इदं तत्र तत्र स्पष्टं भाष्ये इत्युक्तं प्राक् । किं च भाष्यकृतापादानविषये तत्तद्वा-

तूना स्वार्थपूर्वकबौद्धविश्लेषजनकनिवृत्तिलक्षणया ध्रुवमपाय इति सूत्रेणैव सिद्धिमासाद्य मोत्रार्थानामित्यादीनि प्रत्याख्यातानीत्याशयेनाह । बुद्धिकृतमिति । विवक्षितमिति । विवक्षात एव कारकविभक्तयो भवन्तीति भाष्यसिद्धान्तादिति भावः । ततश्च संबंधसामान्ये षष्ठ्येव समास इति नात्र कारकपूर्वकत्वमित्याशयः । उपायस्योपायान्तरादूषकत्वेनाह । वृश्चिकसंबाधिनीति । सा चासौ भीश्चेति विग्रहे पूर्वपदान्तर्गतस्योत्तरपदस्य शाकपार्थिवादित्वाल्लोपप्रवृत्तेराह । उत्तरेति । अल्लोपयलोपाविति । अतो लोपो लोपो व्योर्वलीति सूत्राभ्यामित्यर्थः । नच यलोपेऽल्लोपस्य स्थानिवत्त्वम् । यलोपे तन्निषेधात् । नच पूर्वं वेरपृक्त इति क्विलोपे ल्परत्वाभावात्कथं यलोपः । वेरपृक्तलोपात्पूर्वं वलिलोप इष्यते इत्युक्तेः । स्थानिवत्त्वादिति । एवं सति एरनेकाच इति यणादेशे यलोप सख इति स्यादिति भावः । ननु अन्तर्वर्तिनीं विभक्तिमाश्रित्य सखीशब्दस्य पदत्वान्न पदान्तेति निषेध इति चेन्नैवम् । नः क्ये इति सामान्यापेक्षनियमेनास्यापवादत्वात् । परपदस्याजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्चेति वक्ष्यते । न चान्तरंगे यणि कर्तव्ये क्विपेक्षत्वेन वहिरंगस्य क्यच्संबंधियलोपस्यासिद्धत्वम् । परिभाषाया अनित्यत्वात् । तत्र मूलं वक्ष्यते अत आह । घाविति । लुप्तमित्यत्र भावे क्तो लोप इत्यर्थः ॥ गोमन्तमिच्छति ततः क्विपि गोमानिति भाष्योक्तेरिदमपि क्वचित्स्वीकर्तव्यमिति भावः । सार्वत्रिकं तु दीर्घविधिं प्रति न स्थानिवदित्येवेति दिक् । एकदेशेति । नच दीर्घस्य कथं विकृतत्वम्, स्वरूपभंगस्यैव विकारपदार्थ-

त्वादिति भावः । अनाङीति । अभिव्यक्तपदार्था ये इति न्याय-स्यात्र न विषयता गौणमुख्यन्यायवत्पदकार्यविषय-त्वादित्याहुः । ननु व्युत्पत्तिपक्षे तृनन्तत्वात्तृजन्तत्वाद्वा दीर्घे सिद्धे नप्त्रादिग्रहणं व्यर्थमत आह । नियमार्थमिति । उणादि व्युत्पन्नानां संज्ञाशब्दानां दीर्घश्चेन्नप्त्रादीनामेव नान्येषाम्, भवन्ति हि नप्त्रादय औणादिका इति दीर्घभाजनो भवन्ति चेतरे पितृभ्रात्रादय औणादिका इति न दीर्घभाजः । धातृकर्तृयन्त्रा-दयश्च नोणादिव्युत्पन्ना इति नियमानन्तर्गतत्वाद्दीर्घभाज एवेति भावः । अव्युत्पत्तिपक्षे तु न आदिग्रहणं विध्यर्थमिति स्पष्टमेव । पितृभ्रात्रादीनामप्यत्रपक्षेऽप्तृन्निति सूत्रे पाठाभावादेव न दीर्घशं-कालेश इति दिक् । तृतीये भाष्ये तु ण्वुल्तृचाविति सूत्रे कि-मर्थं चकारः । अप्तृन्तृच इति विशेषणार्थः । तृ इत्युच्यमाने मातरौपितरावित्यादावपि प्राप्नोति । नप्तृग्रहणं नियमार्थं भवि-ष्यति योनिसंबंधवाचिनां चेदस्यैव नान्येषां योनिसंबन्धवाचिना-मिति तृचश्चकारो व्यर्थ इति । एवञ्च पित्रादयोऽपि निरनुबंधक-तृप्रत्ययान्ता एवेति लभ्यते । तृन्निति सूत्रे नेष्टृत्वष्टृक्षत्तृहोतृपोतॄणां तृन्नंतत्वस्य प्रशास्तृशब्दस्यापि तृन्नंतत्वस्य भाष्यवार्तिकयोरुक्त-त्वेन तेषां ग्रहणम् दृष्टार्थं प्रपंचार्थमेव वा तथा च यथान्यासे नियमफलं चिन्तनीयमिति प्राहुः । यद्यपि तृन्प्रत्ययान्तस्य क्रोष्टॄनित्यादि सिद्ध्यति तथापि शृगालवाचिनोस्तुन् तृजन्तयोः क्रोष्टुक्रोष्टृशब्दयोरुभयोरप्यविशेषणप्रयोगे प्राप्ते सर्वनामस्थाने स्त्रियां च तृजन्त एव तृतीयादावच्युभयमन्यत्र तृन्नंतमेवेति नियमार्थो

तृज्वत् क्रोष्टुः स्त्रियां च विभाषा तृतीयादिष्वचीति त्रिसूत्री आरभ्यते ततश्च पक्षे प्रसक्तदोषं प्रतिपादयितुमाह परत्वादिति । नच कृताकृतप्रसंगित्वेन नुटो नित्यत्वात्परस्मादपि नित्यस्य प्रबलत्वात्तृज्वद्भावे सन्निपातपरिभाषया नुटोऽप्रसक्त्या नित्यत्वालाभात् नुमचिरेति वारिणामित्यादावि्कोचीति नुमि सति नामीति दीर्घो न स्यादिति सफलम् । तिसृणामित्यत्राचिरऋत इति रादेशे रूपासंगतिः प्रकृतेऽपि रूपासंगतिरेव । नचाचिरऋत इति अपवादसूत्रं बाध्यसामान्यचिन्ताश्रयणेन स्वविषये प्राप्तस्य सर्वस्यापि बाधकम् अत एव गुणदीर्घोत्वानामपवाद इति वक्ष्यतीति तृज्वत्सूत्रे स्पष्टं भाष्ये । एवं चाविशेषादनेन बाधिष्यते नुडित्युत्सर्गापवादयोरसमबलत्वात्कथमिह विप्रतिषेधसंगतिरिति वाच्यम् । तृज्वत्सूत्रे न तिसृेति ज्ञापकेन नुड् न तु विप्रतिषेधेनेति भाष्योक्तेः । दीर्घऋकारान्तस्य ऌकारान्तस्य च प्रायः प्रयोगाभावादनुकरणशब्दं निरूपयति कृ तृ इत्यादिना । प्रकृतिवदिति । अनुकरणस्य शब्दमात्रोच्चारणतात्पर्यविषयत्वेनानुकार्यशब्दस्वरूपमात्रबोधकं तत्र, प्रकृतिरनुकार्यं तेन तुल्यं वर्तत इति तदर्थः । अनुकार्यं चानुकरणाद्भिन्नमेवेति मतौ इत्यत्र स्पष्टं भाष्ये । अयं चातिदेशो यत्तदेतेभ्य इत्यत्रानुकरणेत्यदाद्यत्वकरणेन ज्ञाप्यते, एकशेषाकरणेन क्षिय इत्यादौ धात्वनुकरणे विभक्तिकरणेन चास्य वैकल्पिकत्वमपि ज्ञाप्यत इत्याह वैकल्पिकेति । अनुकरणस्यानुकार्यशब्दरूपमर्थ इत्यर्थवत्वात्प्रातिपदिकत्वं ततः सुबुत्पत्तिः । न चैवं भृगत्तायामित्यादावपि स्यात् अत एव

निर्देशादनुकरणाद्विभक्त्यभावोऽपि क्वचित्, गवित्ययमाहेत्यत्र वांतस्यैवानुकरणमनुकार्यशब्दभंगाभियावलोपश्च न झलां जसित्यादौ जस्त्वाभाववदित्यपि प्राहुः । इत्व इति । ऋत इद्धातोरित्यनेनेति भावः । न च धातोरुच्यमानं कार्यं तत्प्रत्यये भवतीति न्यायात्कथमत्रेत्वम् । किरश्च पंचभ्य इत्येतत्सूत्रनिर्देशादेव तदप्रवृत्तेः । कीरिति । कृधातुरित्यर्थः । ननु ईना श्रिया सह वर्तते इति विग्रहे तेन सहेति तुल्ययोगे इति बहुव्रीहौ वोपसर्जनस्येति सहस्य सभावे आद्गुणे कृते से इत्यादि सिद्धौ तत्रैकादेशस्य पूर्वान्तवद्भावेनाव्ययत्वात्सुलुगिति चेन्न । लिंगाद्यन्वयार्थप्रतिपादिकत्वादव्ययमिति महासंज्ञाया अन्वर्थत्वेनास्याव्ययत्वाभावात् । न च सादेशात्पूर्वमन्तरंगत्वादाद्गुणे ततः सहेत्यस्य सादेशेऽदन्त एव नत्वेकारान्त इति वाच्यम् । नेन्द्रस्य परस्येत्युत्तरपदवृद्धिविप्रतिषेधे न पूर्वपदनिमित्तककार्य्योत्तरमेकादेश इति सामान्येन ज्ञापनात् । ननु स्वादिष्विति योगं विभज्य स्वादिषु पूर्वं पदमिति तदर्थः । ततोऽसर्वनामस्थाने यचीति । तत्रायचीति च च्छित्वा प्रसज्यप्रतिषेधमाश्रित्य यजादौ सर्वनामस्थाने पूर्वं पदं न मध्ये चेत्सुवंतं तदपि पदं नेत्युक्तं भाष्ये तथा च सावपि पदत्वसत्त्वात्से इत्यादिशब्दस्वीकारे नान्तः पादमित्यत्र न चेङः । पदान्तात्परो रुरस्तीति भाष्योक्तिर्व्याहन्येतेति चेन्न । योगविभागसिद्धस्य सोपदत्वस्य क्वाचित्कत्वेनादोषात् । न च स य इत्यादावन्तर्वर्त्तिविभक्त्यापदत्वादेङः पदांतादतीति पूर्वरूपेण भाव्यमिति वाच्यम् । उक्तरीत्या पदत्वाभावात् । उत्तरपदत्वे चेति प्रत्ययलक्षणप्रतिषेधाच्च । नन्वोतोम्

शसोरित्यत्राम् शसोस्तद्धितयोरपि संभवात्सुबन्तर्गतयोरेवेति कथं विशेषावगतिरित्याशंक्याचीत्यधिकारादजादिश्शस्सुबेव संभवति न तु तद्धित इति निश्चित्याह । साहचर्यादिति । न च गामित्यत्र परत्वादचोञ्णितीति वृद्धिः, अनवकाशत्वादात्वस्यापवादत्वेन वृद्धेर्बाधकत्वात्तदाह । ओतो णिदिति सूत्रे तपरकरणादकारो न विवक्षित इत्याशयः । तेनौकारान्ताभावादल्विधौ स्थानिवत्त्वाभावाच्च चित्रगुरित्यादौ न दोषः । अन्यथांगाधिकारे तदन्तविधिलाभात्स्थानिवत्त्वेन गोन्तत्वात् स्यादेव दोषः । नन्वोत इति-पंचम्यंतत्वात्परत्वलाभेन हे भानो इत्यादौ प्रत्ययलक्षणेन संबुद्धिपरऽत्वात् णिद्भावे वृद्धिप्रसंग इत्यत आह । विहितमिति । यदि वर्णग्रहणेऽपि लक्षणप्रतिपदोक्तपरिभाषा प्रवर्तते इति मन्यते तदा विहितविशेषणमिति नारब्धव्यम् । किंच गोतो णिदित्यत्र तपरकरणं प्रत्याख्याय चित्रगुरित्यादौ गोपूर्वत्त्वाणित्वात्वस्वरेषु स्थानिवत्त्वप्रतिषेध इत्यनेनातिप्रसंगं समाधाय हे चित्रगो इत्यादौ लाक्षणिकत्वान्न दोष इति तत्रैव स्पष्टं भाष्ये, द्योः सर्वनामस्थाने णित्त्वं वक्तव्यमित्यौतोम् शसोरित्यत्रोक्तं भाष्ये, पूर्वोत्तरमतयोरुभयोरपि भाष्यवार्त्तिकस्थयोर्युक्तत्वायुक्तत्वे विभावनीये इत्याहुः ।

इति अजन्ताः पुंल्लिंगाः ।

## अथाजंताः स्त्रीलिंगाः ।

नन्तु रमततेः पचाद्यचि टाऽप्येकादेशस्य पूर्वांतत्वेन प्रातिपदिकत्वात्सुपि सम्बोधने हल्ङ्यादिलोपेऽपि संबुद्धौ चेति विष-

यस्सप्तमीत्वात्प्रत्ययलक्षणेन वा संबुद्धिगुणे सिद्धमिष्टमित्येङ्ग्रहणं तत्र विफलमित्याशंक्याह । एङ्ह्रस्वादिति । संबुद्धौ प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकया हल्ङ्यादिलोपात्प्रथममेत्वे सत्यनेनैव लोपसिद्धिरिति भावः । अत एव सन्निपातपरिभाषा न प्रवर्तते । ननु रमाभिरित्यादौ एकादेशस्य पूर्वान्तवत्त्वेन ग्रहणादतो भिस ऐस् स्यात् अत एवावन्तस्य सर्वादिगणे पाठाभावेन सर्वनामत्वाभावमाशंक्यैकादेशस्येत्यादि समनन्तरं वक्ष्यति । न च तपरत्वसामर्थ्यान्नैस् । अकृतैकादेशे विश्वपाभिरित्यादौ कृतार्थत्वादिति चेन्न । वर्णमात्रवृत्तिधर्मस्य तेनातिदेशाभावात् । अत एव षत्वे तुकि च एकादेशो सिद्ध इत्यर्थकस्य षत्वतुकोरासिद्ध इति सूत्रस्य चारितार्थ्यम् । अन्यथाधीत्येत्यादावनेनादिवद्भावे सति ह्रस्वस्य पितीति ह्रस्वप्रयुक्ततुक्सिद्धौ तद्वैयर्थ्यमेव स्यात् । नन्वस्त्वेवं वक्ष्यमाणे सर्वासामित्यादौ पूर्वान्तवत्वेन सर्वनामत्वेऽप्याबन्तत्वं कथम् । नच परादिवद्भावेन लभ्यं तत् उभयत आश्रयणेनान्तादि वदिति चेन्न । उभयत इत्यस्य भाष्यैकदेशिनोक्तेः । यद्वा लिंगविशिष्टपरिभाषयाबन्तस्य सर्वनामत्वमाबन्तत्वं तु परादिवद्भावेनेति मूलोक्तं तु न युक्तमिति प्राहुः । सर्वस्यामित्यादौ स्याड्विधेराबन्तसर्वनाम्नोरपेक्षितत्वेनास्मन्वदुक्तिरेव, मूलस्य तु सुड्विधेः सर्वनामत्वस्यापेक्षितत्वेन पूर्वान्तवद्भावस्यैवेहोपयोगात् प्रकृतेनायुक्तेति वस्तुगतिः । केचिदिति । निर्जरसिनेत्यादिपाठकर्तार इत्यर्थः । तन्निर्मूलमिति । पूर्वत्र सन्निपातपरिभाषाप्रवर्तकपरभाष्यादिवि-

रोधेन त्वोत्प्रेक्षितमूलस्याप्रमाणत्वादिति भावः । नवीनानुरोधेन विभक्त्यादेशेभ्यः परत्वाज्जरसित्यत्रापि पक्षे दोषमुद्भावयति । यद्यपीति । ननु जरसादेशः नुट्शीभावयोरपेक्षया परत्वादास्तां जरस् एत्वयाडामां तु जरसपेक्षया परत्वात्ते एव जरसं बाधित्वा संपद्येरन् 'मैवम् । एत्वे कृतेऽप्येकदेशविकृतन्यायेन जरसादेशप्रसक्तया नित्यत्वेन जरस एव प्रवृत्तेः न चैत्वमपि नित्यम् । जरसादेशे कृतेऽपि स्थानिवत्त्वेन तत्प्रसक्तेरिति शंक्यम् । प्रश्लेषस्य वक्तव्यत्वेन स्थानिवत्वाप्रवृत्तेः । याटमपि बाधते जरसं त्वंतरंगत्वात् । आकाररूपापःपरस्य ङितः सुपो विहितस्य याटो बह्वपेक्षत्वेन बहिरंगत्वात् । आमपि बाधते जरसनित्यत्वात् । न चाकाररूपावन्तात्परस्यामि कृते संनिपातपरिभाषया जरसोऽप्रवृत्तौ न तस्य नित्यता तस्याः परिभाषाया अनाश्रयणादिति सर्वथा प्रथमं जरसादेशमेवेति भाव इत्याहुः । उक्तरीतिमन्यत्राप्यतिदिशति । एवं न सिति । अल्विधित्वं व्याचष्टे । आकाररूपस्यैवेति । स्थानिन आप आकारमात्राश्रयणे तथात्वमिति भावः । अन्ये त्वाहुः । एत्वशीनुड्याडामां नित्यत्वात्प्रथममेतेषु कृतेषु क्वचिदजादित्वाभावात्क्वचित्संनिपातपरिभाषया जरसोऽनापत्तिरेव । यत्तु याटो बहिरङ्गत्वमामो नित्यत्वं चोक्तं तन्न बहिरंगपदस्य शब्दमर्यादया बह्वपेक्षत्वालाभाद्भाष्यानुक्तत्वाच्च जरसादेशविषये विशिष्य संनिपातपरिभाषाया अनित्यत्वमाश्रयतो भाष्यकृतो विरोधादुपेक्ष्यम् । पूर्वप्रतिषेधेन जरसादेशाद्विभक्त्यादेश एवेष्टो भाष्य इत्युक्तमेव । तस्मात्पूर्वोक्तपंचविधेषु कृतेषु ततो नुड-

याटोरजादित्वाभावादितरत्र संनिपातपरिभाषया जरसोऽप्राप्तौ सर्वदोषोद्धाराज्जरानासिकादिशब्दे आकारप्रश्लेषस्य न फलं नापि मानमिति । अत एवानुपपत्तेरन्यशब्दे फलं दर्शयितुमुक्तरीतिमाह एवमिति । प्रत्याख्येयमिति । दीर्घग्रहणं हि अतिखट्वो निष्कौशाम्बिरित्यादौ स्थानिवद्भावेन ङ्याप्त्वमाश्रित्य लोपप्राप्तेर्वारणार्थम् । प्रश्लेषे तु ङ्यापोः स्थानिनोराकारेकारमात्राश्रयणेऽल्विधित्वात्स्थानिवत्त्वाप्रवृत्तेर्लोपाप्राप्तौ व्यर्थत्वात्तस्येति भावः । याडाप इत्यादौ प्रश्लेषफलं दर्शयितुं चोदयति न चेति । स्वाश्रयमिति । स्वः श्रूयमाण आकारः स आश्रयोऽधिष्ठानं यस्य तत् धर्मधर्मिणोरेकाधिकरणत्वात्तदाहाकारत्वमिति । यत्तु यजादिसुब्निमित्तकमित्यर्थ इति तस्याकारस्य तथात्वेऽप्याकारत्वस्य तदभावादुपेक्ष्यम्, यद्वा यथा घटोऽस्तीत्युक्ते घटत्वस्य पृथक् सत्त्वोल्लेखाभावात्समानियतत्वेन धर्मधर्मिणोः तथेहाप्यास्तामित्यन्यत्र विस्तरः । स्थानिवद्भावेनाप्त्वमिति । न च ङ्याप्स्थानिकोऽदीर्घ आदेशो न स्थानिवदित्यर्थकेन ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिवदिति वार्त्तिकेन ह्रस्वे आप्त्वस्य विच्छेदात्कथं दीर्घे स्थानिवत्त्वेनाप्त्वलाभ इति वाच्यम् । याडाप इत्यादिषु प्रश्लेमाश्रित्य स्थानिवत्त्वनिषेधप्रत्याख्यातृभाष्यमते शंकाऽसत्त्वेनादोषात् । इदं च भाष्य एव स्पष्टं याडाप इति सूत्रे, तद्यथातिखट्वायेत्यत्र स्थानिवत्त्वाद्याट् प्राप्नोति तस्य प्रतिषेधो वक्तव्यो न वक्तव्यः ङ्याब्ग्रहणेऽदीर्घ इति स्थानिवत्त्वनिषेधादिति । याट् स्यादिति । न चाकारस्य लाक्षणिकत्वान्न स्यादिति वाच्यम् । अतिदेशविषये

लक्षणप्रतिपदोक्तपरिभाषायाः प्रवृत्तावतिदेशवैयर्थ्यापत्तेरत आह आवन्तं यदंगमिति। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्त-दन्तस्य ग्रहणमिति परिभाषयातिखट्वेति यदंगं न तदावन्तं यच्चावन्तं खट्वेति न तदङ्गमिति न याडागमप्रसक्तिरिति भावः। ननूक्तपरिभाषयावन्तग्रहणेऽङ्गं प्रत्यावन्तस्य विशेषणादावन्तान्तं यदङ्गमित्यर्थादतिखट्वायेत्यादावावन्तान्तं यदङ्गमित्यर्थाद्याड् स्यादेव, न चाङ्गेनैवावन्तं विशिष्याङ्गसंज्ञकं यदावन्तं तस्माद्या-डित्यर्थान्न दोष इति वाच्यम्। अङ्गस्य विशेषणत्वे दृढतरमाना-भावात् पदाङ्गाधिकारे इति वार्तिकेनाङ्गस्य विशेष्यताया एव लाभाच्च। खट्वाया अर्द्धेऽर्द्धखट्वायामित्यादावुक्तार्थे सति याडना-पत्तेश्चेति दिक्। किं च श्रुतमाकारं स्मृतमनुबंधं चादायाप्त्वानुसं-धानात्स्यादेव याडिति चेन्न भाष्येऽस्याकारस्य लाक्षणिकत्वान्न याडित्युक्तेः। न चैवं सति खट्वाय इत्यत्र याडनापत्तिः। सूत्रं तु निशायै इत्यादौ चरितार्थमिति वाच्यम्। यस्य रूपस्य लक्ष-णप्रवृत्तिमन्तरेणासंभवस्तस्यैव लक्षाणिकस्य तत्परिभाषाविषयत्वेन प्रचकादेशात् प्रागपि आत्वसत्त्वेन तद्रूपत्वात्परिभाषाया अप्रवृत्तेः। ननु लाक्षणिकत्वादाकारस्येति कथमत्र समाधानम्। वर्णग्रहणे उक्तपरिभाषाया अप्रवृत्तेः, अन्यथा हरये इत्यत्रैकारस्य लाक्षणिकत्वादेचोयवायेति न स्यादितिचेन्न। अनदः अदः अभवत् अदो भवदित्यत्र प्राप्ताप्रोदिति सूत्रेण प्रगृह्यसंज्ञा निवारयितुं लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येत्येव न भविष्यतीति भाष्योक्तेस्तत्रापि परिभाषायाः प्रवृत्तेः अत्र

लाक्षणिकत्वान्न याडिति भाष्योक्तेश्च, अतिप्रसङ्गस्तूक्तस्यानित्यत्वाद्वारणीय इत्यधिकं नागेशीये । अंगस्येत्यधिकारेण लाभे साक्षाच्छ्रुतत्वात्स्त्रियामिति त्रिचतुरोरेव विशेषणं न त्वङ्गस्येत्यभिप्रेत्याह । स्त्रियामिति । तेन स्त्रीनिष्ठसंख्यायां वर्तमानयोरित्यर्थः संपद्यते । तेनेहेति । त्रिशब्दस्य पुन्नपुंसकवृत्तित्वेऽपि समुदायस्य स्त्रियां वृत्तेरङ्गविशेषणत्वे त्वादेशः स्यादिति भावः । प्रियतिस्रेति । अंगविशेषणत्वे त्वत्राव्याप्तिः स्यादिति भावः । प्रिया जस् त्रि जस् इति स्थिते अंतरंगानपीति न्यायेन सुब्लुकि पुनः सुपि तदन्तविधिना निर्दिश्यमानपरिभाषया त्रिशब्दस्यादेशः नद्यृतश्चेति कप् तु न समासार्थलौकिकवाक्ये ऋदंतोत्तरपदत्वाभावात् । ऋदुशनेत्यनङ् । अनित्यत्वादिति । इकोऽचीत्यज्ग्रहणमिह ज्ञापकम् । तद्यथा । भ्यामादौ नुमि सति न लोपः प्रातिपदिकान्तेति लोप एव । न च नङि संबुद्ध्योरिति निषेधात्संबुद्धौ नलोपो न भवतीति तत्रानिष्टवारणायाचीत्यावश्यकम् । संबुद्धिश्च लुका लुप्तेति प्रत्ययलक्षणेन नुमः प्राप्तिर्वाच्या प्रत्ययलक्षणञ्च न लुमतेति निषेधस्यानित्यतां विना दुर्लभमित्यज्ग्रहणं व्यर्थं सत् ज्ञापकं सामान्यापेक्षमित्याकरे स्फुटम् । ननु कथं ज्ञापकत्वं वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम्पूर्वविप्रतिषेधेनेति वचनात्प्रथमं नुमि अतिराभ्यामित्यादौ नलोपे सत्यपि तस्यासिद्धत्वेन नुमा व्यवधानात् रायो हलीत्यात्वं न स्यात् पदाङ्गाधिकारान्नुमाङ्गस्य व्यवधानाभावेऽपि नुम एवात्वे पूर्वस्य याणि रूपासंगतेर्वेति चेन्न । तत्र हि वृद्धिशब्देन विहितवृद्धेरेव ग्रहणादत्रात्वस्य तथात्वाभावात् । ननु

शुचीनामित्यादौ नुटि नुमि च सतीनहाम्नीति नियमाद्दीर्घो न स्यादिति चेन्न । नुमचिरेति पूर्वविप्रतिषेधेन नुमं बाधित्वा नुटि सकृद्गतिन्यायेन नुमोऽप्रवृत्तेः । लक्षणप्रतिपदोक्तपरिभाषयात्र नियमाप्रवृत्तेश्च । न च पञ्चत्रपुभ्य इत्यादौ नुमि सतीगन्तोचरपदाद्युदात्तत्वप्रयुक्तपूर्वपदप्रकृतिस्वरो न स्यादिति वाच्यम् । समुदायस्य भक्तत्वेनावयवस्येगंतत्वाविघातात् अनिमित्तकत्वे नान्तरंगत्वात्प्रथमं स्वरस्यैव प्रवृत्तेश्च । बहुभिः कुलैरित्यत्र नुमि पदसंज्ञकत्वेन झल्युपोत्तमामिति प्राप्त्या तदभावेऽपि बहुशब्दस्यान्तोदात्ततया न स्वरे विशेषः । न च अस्थिदधीत्युत्तरार्थमज्ग्रहणम् । तत्रैव कर्तुमुचितत्वात् । कृतं चात्र तदनित्यत्वे ज्ञापकमिति स्पष्टम्भाष्ये । द्वेरत्वे सत्याविति । विभक्तिसन्निपातकृतमपि त्यदाद्यत्वं टापो निमित्तं भवत्येव । नद्यासयोरिति निर्देशेन तस्याः परिभाषाया अनित्यत्वज्ञापनात् । न चानिमित्तकत्वेन टापोऽन्तरङ्गत्वात्तत्र कर्तव्येऽत्वस्यासिद्धत्वम् । उक्तनिर्देशेनास्या अपि अनित्यत्वज्ञापनात् । न ह्येकैकमेव ज्ञाप्यमिति राजामाज्ञास्ति किन्तु यावतां विना स्वस्यानुपपत्तिस्तस्य सर्वस्यापि ज्ञापनात् । मत्यशिश्रीति ङीपि यस्येति चेतीकारलोपे सखीशब्देऽपि सखिशब्दोक्तं कार्यमुद्भावयति प्रातिपदिकेति । विभक्ताविति । विभक्त्याश्रये कार्ये क्रियमाणे लिङ्गविशिष्टपरिभाषा नेष्यत इत्यर्थः । इदं च ङ्याप्प्रातिपदिकादित्यादौ भाष्ये पठितम् । प्रातिपदिकेतिपरिभाषाया अनित्यत्वमाश्रित्य दूषितं च नादिनि दिक् । टिति ह्रस्वश्चेत्यत्रास्ति वाक्यद्वयम् । एकत्र यू इति व्याख्यावितिं अर्थाः इति इय-

उवङ्स्थानाविति वेति चानुवर्त्तते। अपरत्र तु यू इति स्त्रीवाचकका-
वित्येतन्मात्रार्थकं व्याख्याविति। तत्राद्ये इयङुवङ्स्थानौ स्त्रीश-
ब्दभिन्नौ नित्यस्त्रीलिङ्गाविति त्रीणीदूतोर्विशेषणं ह्रस्वयोस्तु स्त्रिया-
मिति तथा चातिस्त्रिशब्दे पूर्ववाक्यस्याप्राप्तिरित्याशयेनाह। ङिति
ह्रस्वश्चेति। ननु नित्यस्त्रीलिङ्गाविति ह्रस्वयोर्विशेषणं मास्तु।
अन्यथा इष्वशनिप्रभृतीनामुभयलिङ्गानां मृदुपटुप्रभृतीनां सर्वलि-
ङ्गानां स्त्रीत्वेऽपि नदीत्वं न स्यात्। वक्ष्यमाणे कैयटमते नित्यस्त्री-
त्वाभावात्। मतान्तरेऽपि ह्रस्वांशे नित्यग्रहणव्यावर्त्यालाभाच्चेति
अस्त्रीति ह्रस्वयोर्विशेषणं स्यादेव ततश्च स्त्रीशब्दावयवाभिन्नह्रस्वे-
वर्णान्तादित्यर्थेन कथमत्र विकल्पप्राप्तिरित्यत आह। अस्त्रीति।
तत्र हेतुमाह। तत्सम्बद्धस्यैवेति। इयङुवङ्स्थानावित्यत्र विशे-
षणीभूतस्यैवास्त्रीत्यस्य ङिति ह्रस्वश्चेत्यत्रानुवृत्तेरित्यर्थः। एकत्र
विशेषणतयान्वितस्यापरत्र ह्रस्वांशे विशेषणतयैवान्वयायोगादिति
भावः। नन्वियङुवङ्स्थानावित्यनेनापि ह्रस्वस्य निषेधः किन्न
स्यादत आह दीर्घस्यायमिति। तत्र ह्रस्वपदाभावादिति भावः।
तदाह। न तु ह्रस्वस्येति। एवञ्चेति। स्त्रिशब्दस्यैकदेशविकृत-
न्यायेनेयङ्स्थानत्वेऽपि ह्रस्वान्तप्रयुक्त एव विकल्प इति पुष्कलम्।
प्रधीशब्दस्येति। प्रकृष्टं ध्यायतीत्यर्थकस्येत्यर्थः। वृत्तिकारादीना-
मिति। तेषामयं भावः। आध्ये प्रध्ये इत्यादाववयवस्येयङुवङ्-
स्थानत्वान्नेयङुवङ् स्थानाविति। नदीत्वनिषेधः प्राप्नोति सिद्धं
त्वंगग्रहणात्। यथाङ्गस्येयुवौ भवतस्तस्येदं ग्रहणं न
चैतस्याङ्गस्येयुवौ भवत इत्युक्तं भाष्ये तत्र न बहुव्रीहिः

कव्युत्पत्तेः किन्तु प्रकृष्टं ध्यायतीत्याद्यर्थकन्तत् । तत्र कैयटो-
क्तनित्यस्त्रीत्वाभावेन नदीत्वाप्राप्त्या भाष्यासंगतिः । अतो
यूस्त्र्याख्याविति सूत्रे स्त्रीविषयावेव यौ यू नित्यमिति
भाष्योक्तौ एवकारो भिन्नक्रमः । नित्यमेव यौ स्त्रीविषयावित्यर्थः ।
नित्यमेवेत्यस्य पदान्तरं विनापीत्यर्थः । खलपूकटप्रूग्रामण्या-
दीनां क्रियाशब्दतया पुँल्लिङ्गे मुख्या वृत्तिः । पुंसः खल्वयमु-
चितो धर्मश्शक्तत्वाद्द्वयगृहीतत्वाच्च । अतस्तेषां न पदान्तरं विना
स्त्रीवृत्तित्वम् । ध्यानादिकं तु स्त्रीपुंससाधारणमिति । कैयटमत
इति । अस्यायं भावः । पूर्वोक्तं नित्यस्त्रीत्वं त्वसंगतं सूत्रभाष्या-
द्यक्षरमर्यादयोक्तार्थालाभात् भाष्योदाहृते कत्रापि न नद्यृतश्चेत्यत्र
ऋकारसाहचर्येण यस्य वृत्तेः प्राङ्नदीत्वं तदुत्तरपदके एव तत्प्रवृत्तेः।
धीशब्दस्य चेयङ्स्थानकत्वेन प्राङ्नदीत्वनिषेधात् । गतिपूर्वक-
त्वाद्यणापि सुलभः । तस्मात्सूत्रभाष्याद्यक्षरानुगृहीतं लिङ्गान्तरेति
मदुक्तमेव युक्तमिति । अन्ये तु प्रवृत्तिनिमित्तैक्ये लिङ्गान्तरविशि-
ष्टार्थानभिधायकत्वं तदित्याहुः । ननु नेयङुवङ्सूत्रे स्थानशब्दो
भावल्युडन्त इयङुवङो स्थितिर्ययोरिति बहुव्रीहिस्तत्र संबुद्धिवि-
षये तत् स्थितेरभावेन नदीत्वनिषेधाभावात् हृस्वप्राप्तावपि
तद्वारणाय तत्स्थितेरुपलक्षणतया व्याख्यानेनेयङादिविषये तत्स-
त्त्वादिति समाधानेऽपि नेयादिति सूत्रमवयवस्यैव नदीत्वनिषेध-
कम् । तदुक्तं भाष्ये । अवयवस्येयङुवङ्स्थानत्वान्नदीत्वप्रतिषेधः
प्राप्नोतीति तथा च सुभ्रूशब्दे हृस्वः स्यादेवेत्याशंक्याग्रे भाष्ये
सिद्धं त्वङ्गरूपग्रहणाद्यस्याङ्गस्येयुवौ भवतस्तस्येदं ग्रहणमित्युक्तम् ।

यत्र नदीकार्याश्रयेऽङ्गे वाधिकाबाधिते यडादिः स्थितिः क्वचिद्दृष्टा तस्य तदवयवस्य निषेध इति फलितार्थो भाष्ये इति व्याख्यातारः। एवं नदीत्वनिषेधादम्बार्थनद्योरिति न ह्रस्व इत्यभिप्रेत्य शंक्यते कथं तर्हीति। हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः। विधिना त्वया हापितस्त्याजितं स रामो हेसुभ्रु क्वासीति एवं बहु विललापेति तदर्थः। रावणेन सीतापहरणोत्तरं रामविलापपरम्। प्रमाद इति। विरहपीडितत्वेनानवधानलक्षणोऽत्र प्रमादः स च विरहपोषकत्वात्काव्ये गुणः। तादृशशब्दस्तु व्याकरणविरुद्ध एव। केचन सामान्येनपुंसकादिना समादधुरित्याह। बहव इति। ननु वाभावकरणयोरित्यतो वेत्यनुवर्तते तेन प्रातिपदिकान्तेत्यनेन वैकल्पिकणत्वप्राप्तावपि तद्वारणाय रषाभ्यां नोण इत्यस्माण्णकारानुवर्तनेन सिद्धाविहत्यणग्रहणं नित्यार्थमावश्यकमित्यत आह आरम्भसामर्थ्यादिति। वैकल्पिकस्यैवात्र णत्वस्य समीहितत्वे तु पूर्वेणैव तत्सिद्धावेतत्सूत्रवैयर्थ्यापत्तेरिति भावः। एवं चान्यथैव नित्यत्वलाभे णकारग्रहो नोपयोगीत्याह स्पष्टार्थमिति। स्पष्टताऽदृष्टार्थफलकमित्यर्थः॥

इत्यजंताः स्त्रीलिंगाः।

## अथाजंन्ता नपुंसकलिंगाः।

सोरमोति। लुको बाधकत्वादिति भावः। परत्वादिति। अजरसि इति स्थिते प्रथममजंतलक्षणे नुमि तस्यांगभक्तत्वादङ्गाव्यवधायकत्वेऽप्यवयवस्य जराशब्दस्य व्यवधायकत्वेन निर्दिश्यमानप-

रिभाषयापि जरसो न प्राप्तिः अन्त्यादचः परस्तस्यैवान्तावयवो मित्स्यादिति मतेऽप्यवयवावयवः समुदायस्याप्यवयवः इत्यभ्युपगमेन कथंचिज्जरसादेशे जातेऽपि सान्तमहत इति दीर्घो न स्यादिति भावः । अपवादमिति । अदन्तेऽपि लुकि वचनवैयर्थ्यस्यादिति भावः । सन्निपातेति । जराशब्दे सर्वथा नित्यप्रवृत्तिकयेति भावः अन्ये त्वाहुः । अजरासीत्यत्र नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरसि झलन्तलक्षणो नुमिति शब्दत्वेन सादृश्यं न लुमतेत्यस्यानित्यत्वं चेति प्रभृतिग्रहणस्याप्रकारार्थत्वेऽपि भाष्यं संगतमित्याभिमन्यमानं प्रत्याह वस्तुत इति । सुत्त्वेनैव सादृश्यं मांस्पचन्या इति न लुमतेत्यस्यानित्यत्वेन इपरत्वमिति भावः । न च मांसस्य पचि युड्घञोरित्यनेनैव सिद्धं तस्याप्येतत्सिद्धार्थानुवादकत्वात् । उक्तप्रयोगे मांसीत्यस्यायस्मयादीनि छन्दसीति सूत्रेण भपदसंज्ञयोर्यथा साधुता तथा बोधकेनान भत्वेनत्र साधुत्वाद्भत्वबोधनादित्याशयेनाह संयोगान्तलोपो नेति । छन्दसीति । शीर्ष श्छन्दसीति सूत्रादिति भावः । वृत्ताविति । वृत्तिग्रंथे इत्यर्थः । अत्रारुचिर्भाष्यकृदननुवर्तनम् । मासश्छन्दसीति । मासस्तकारः स्याद्भादौ प्रत्यये इत्यर्थः । माद्भिः शरद्भिर्दुरोहरं तवेत्युदाहरणम् । सामर्थ्यादिति । अनुवर्तनेनैव छन्दस्यादेशे सूत्रेणैव सिद्धे तद्वैयर्थ्यत्वादिति भावः । कैयटस्य भाष्येऽननुवर्तनेऽपि छन्दस्यापि प्रयोगे बाधकाभावादित्यपिशब्दार्थः । संनिपातेति । एकमात्रावच्छिन्नाकारमाश्रित्य कृतो ऽस्यादेशः कथं तल्लोपे निमित्तं स्यादिति । तत्र यद्यपि कष्टप

क्रमणे इति निर्देशज्ञापितदीर्घेण ह्रस्वत्वांशो निवर्तितस्तथाप्य-त्वमादेशेऽनुवर्त्तते तदपि चेल्लोपेन निवर्तेत तर्हि परिभाषाविरोधः स्पष्ट एवेति भावः । परे तु व्याप्यत्वजातिरूपयञादिसन्निपातनि-मित्तो दीर्घो न स्वसन्निपातविघातकलोपनिमित्तम् । सन्निपातपरि-भाषायाश्च सन्निपातलक्षणविधिप्रवृत्तेः प्राक् तन्निमित्तभूतो यः सन्निपातः तद्विघातकस्य स्वातिरिक्तस्य स्वयमनिमित्तमित्यर्थ इत्याहुः । अनित्यत्वाश्रयणेऽत्र न दृढतरं मानमिदं भाष्यकै-यटयोः स्पष्टम् । भाषितः पुमान्येन शब्देनेति सूत्रार्थेऽ-नादिशब्दे तत्सत्वेऽपि पीलुशब्देऽतिप्रसङ्गः स्यात्तस्माद्भाषितः पुमान्यस्मिन्प्रवृत्तिनिमित्तरूपेऽर्थे इति बहुव्रीहिः । भाषण-क्रियया स्वकरणतयाक्षिप्तशब्दश्च क्लीबेन समानानुपूर्वीकः समानार्थश्च गृह्यते प्रत्यासत्तेस्ततोऽर्श आद्यच् तस्मात्फलिनम् । प्रवृत्तिनिमित्तैक्ये इति । एकस्मिन्प्रवृत्तिनिमित्ते भाषितपुंस्कं यच्छब्दरूपमित्यर्थः । यस्य पुंनपुंसकयोरेकं प्रवृत्तिनिमित्तं तत्पुम्व-दिति वर्तुलार्थः । एवं चानादिशब्दस्योभयत्रारोपितादित्वं प्रवृत्ति-निमित्तमिति भवति पुम्वत्वम् । न च भवति पीलुशब्दस्य वृक्षे वृक्षत्वव्याप्यजातिः प्रवृत्तिनिमित्तं फले तु फलत्वव्याप्यजाति-रित्येकजातेरुभयत्वाभावादित्याह प्रवृत्तिनिमित्तेति । अयं भावः । शब्दानां प्रवृत्तौ कारणं चतुर्विधम् । जातिर्गुणः क्रिया संज्ञा चेति । एवं च जात्यवच्छिन्नो जातिशब्दो यथा घटादिः । गुणाद्यवच्छिन्नो यथा शुक्लश्चलो डित्थ इति । तदुक्तं च चतुष्टयी शब्दानां प्रवृत्तिरिति भाष्ये । त्रयीपक्षोऽपि न सन्ति यदृच्छाः

शब्दा इत्यादिना भाष्य एव स्पष्ट इत्यन्यत्र विस्तरः प्रणीणामिति। माधवस्यायं भावः । नुटो निमित्तस्य ह्रस्वस्य संनिपातस्य दीर्घेण विनाशावश्यकत्वेन तद्विषये सन्निपातपरिभाषाया विषय एव नास्ति । रामाणामित्यादौ सुपि चेति दीर्घो नामीत्यनेन नित्यत्वाद्बाध्यत इति । अथ त्वाशयः श्नान्नलोप इत्यत्र षाष्ठभाष्य-ग्रैयटविरोधादुपेक्ष्यः । नामीत्यस्य नित्यत्वमपि निराकृतं रामा-णामित्यत्रेत्यरुचिबीजं हृदि निधायाह वस्तुतस्त्विति । प्रणी-णामिति । ननु हलीति विषयसप्तमीत्वात्प्रागेवात्वमिति चेन्न आत्वे कृते नुटा प्राप्त्या हलादिविषयत्वाभावात् । नन्वेवमपि कृते नामीति दीर्घे सन्निपातपरिभाषाविरोधासंभवादेकदेशविकृतन्या-येनात्वं दुर्वारमेवेति चेन्न । नामि परे सामर्थ्याद्ध्रस्वेकारस्य दीर्घे-कारकरणेऽपि विजातीयात्वकरणे तु निमित्तेकारापाये नुटीति निवृत्त्यापत्तेः विजातीयकरणे सन्निपातपरिभाषाया विरो-धापत्तेश्च । अत एव श्रीपायेत्यत्र विजातीयलोपो निवारितः । एतेनानात्वं स्यादेवेति मूलोक्तमयुक्तमितिमन्दोक्तमपास्तम् ॥

इत्यजन्ता नपुंसकलिङ्गाः ।

---

## अथ हलन्ताः पुंल्लिङ्गाः ।

उपदेशे त्विमिति । धातोरित्यस्यानुवर्तनेन तु औपदेशिकस्य धातोरित्यर्थकेन दामलिहो व्यावृत्तावपि अधोगिति न संगृह्यते-तो दादेरित्यावर्तते । नन्वनेनातिरिच्यमानेन दादिपदेनोपदेशकाले लक्ष्यत इत्यनुपदेशलाभस्तथापि तस्य किं फलमिति प्रश्नः ।

अव्याप्तेरतिव्याप्तेश्च परिहारः फलम् । लक्ष्ये लक्षणागमनमाद्या अलक्ष्ये लक्षणगमनमंत्येति समाधत्ते अधोगित्यादि मा भूदित्यं-तेन । अटि सत्यप्यौपदेशिकदादित्वाददोषः । संप्रति दादिधातु-त्वेऽप्यौपदेशिकधातुत्वाभावान्नातिव्याप्तिः । वस्तुगत्यातिव्याप्ति-परिहार एव फलं धातोरवयवो यो दादिरित्यर्थेनाधोगित्यादेः सिद्धेः । वैयधिकरण्यान्वयस्तु गर्द्धवित्यादौ भष्भावसिद्धये आवश्यकः स्पष्टं चेदं भाष्ये । केचित्तु व्यधिकरणषष्ठ्यैवाव्याप्त्यतिव्याप्तिपरि-हारः । धातोरवयवो यो दादिस्तस्य हकारस्य घो भवतीति सूत्रार्थः । अधोगित्यादावडागमेऽदोहिति धातुस्तदवयवो दोहिति तदीयो हकारतस्य घः । दामलिड्डिति धातोरवयवो यो दादिर्दामेति न तदीयो हकार इति घत्वाभाव इत्याहुः । ननु समानाधिकरणत्व-मेकधर्मिबोधकत्वमेवोति कारके वक्ष्यते तत्र विशेष्यविशेषणभावमात्रं वैयधिकरण्ये तु भेदः संसर्गो विशेष्यविशेषणभावश्चेत्यत एवो-च्यते । संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वमिति प्रवादः । एवं च लाघवात्समानाधिकरणत्वेनैवान्वयोस्त्वित्याशं-क्याह एकाच इति । एकाज्विशिष्टस्य धातोरित्यर्थे गर्द्धवित्य-स्यानेकाच्त्वाद्भष्भावो न स्यादिति वैयधिकरण्येनैवान्वयो धातो-रवयव इत्याद्युक्तः । ननु धात्ववयवो धातुरिति व्यपदेशिवद्भावेनैव सिद्धावलं वैयधिकरण्यान्वयेन मैवम् । अर्थवतावव्यपदेशिव-द्भाव इति भाष्योक्तेः । तर्हि दुहेर्घत्वे धात्ववयवमेका-ज्रूपं दुइ ति उघ् इति वा तत्राद्यो न झपन्तोऽन्त्येनवश् दुघिति तु नावयव इति प्रकृतासिद्धिरत आह । व्यपदेशिवदिति

असहाये व्यपदेशिवद्भावो वक्तव्य इत्याद्यन्तवत्सूत्रे भाष्ये व्यक्तम् । विशिष्टोऽपदेशो मुख्यव्यवहारः सोऽस्यास्तीति तेन तुल्यमित्यर्थः । ननु धुगित्यादेः प्रातिपदिकत्वात्कथं धातुकार्यमिति चेन्न । अत्वसन्तस्य चाधातोरित्यादिनिषेधेन कारकं प्रत्यप्रधानभूतक्रियावाचकस्यापि धातुत्वज्ञापनात् । न च धातोरुच्यमानं कार्यं तत्प्रत्यये भवतीति परिभाषया धातुसंशब्दनेन विहितः प्रत्ययस्तस्मिन्नित्यर्थकतया कथमत्र धातुकार्यमिति वाच्यम् । अस्य पदान्तनिमित्तत्वेन प्रत्ययनिमित्तत्वाभावात् । अत एवाप्रशानिति चरितार्थम् । अन्यथा मो नो धातोरित्यत्रापि परिभाषायाः प्रवृत्तौ नत्वानापत्त्या व्यर्थमेव स्यात् । ननु सुधियावित्यादावियङादिकं न स्यादुक्तपरिभाषाप्रवृत्तेरिति चेन्न । इयङादेर्वस्तुतोऽङ्गस्यैवोच्यमानत्वादिति दिक् । ननु सर्वनामस्थाननिमित्तकत्वेन सामान्यत्वादामपेक्षया सुनिमित्तकत्वेन विशेषत्वं नुम इति सामान्यविशेषयोर्विशेषो बलीयानिति न्यायेन नुमाम् बाध्यतामित्याशंक्याह न बाध्यते इति । उपजीव्योपजीवकयोर्विरोधाभावेन बाध्यबाधकभावो नास्तीत्यभिप्रायेणोक्तम् । आदित्यधिकारादिति । आच्छीनद्योरित्यस्मादनुवर्तनादित्यर्थः । आमुजीव्यः, नुमुपजीवकः । नन्वादित्यनुवृत्तावपि नित्यमनडुहि विद्यमानो योकारस्तस्मात्कुतो न भवति, मैवं मित्त्ववैयर्थ्यात् । अमा चेति । नुमपेक्षया सम्बुद्धिनिमित्तकत्वेन विशेषविहितनापीत्यर्थः । उपजीवकत्वादेवेति भावः । दत्वं नेति । विधानसामर्थ्यात्सत्वं नाविघ्नो नुम भवितुमर्हतीति भावः । नन्वनड्वास्तरतीत्यत्र नश्छवीति

रुत्वमपि न स्यात् । अत्र भाष्ये समाधानम् । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु निमित्तमेव नासौ बाध्यते । भवतीह दत्वं प्रति नुम्विधिर्निरर्थकः रुत्वं प्रति तु निमित्तमेवेति । ननु हे अनड्वन्नित्यत्र सम्बुद्धिलोपेऽवश्यं प्राप्तेऽम आरम्भादमोऽपवादत्वेन तद्विषये संबुद्धिलोपानापत्तिः विषयभेदेऽप्यचिरादेशस्य नुडपवादत्वमाशङ्कितं सप्तमे भाष्य इति चेन्न । प्रत्ययलोपविधायकैः प्रत्ययानुत्पत्तेरेवान्वाख्यानेनापवादत्वस्यैवासंभवादित्याधिकं नागेशीये । ननु इम इत्येवास्तु सूत्रम्, न च तिमष्टिम इत्यादौ दोषः, त्यदादीनामित्यनुवर्त्य त्यदादीनामिमो अः स्यादित्यर्थात् । न च त्यदादित्वाभावः । द्वेः प्राक् किमः पठितव्यत्वात् । एवं सति किं सर्वनामबहुभ्य इत्यत्र किंग्रहणमकर्त्तव्यमित्यपरमनुकूलम् । तत्र हि अद्यादि इति पर्युदासात्किमोऽप्राप्तौ पृथक् पाठः । द्विप्राक्पठिते तु पर्युदासाप्राप्तौ सर्वनामत्वादेव सिद्धेः । न चेमावित्यादावयं स्यात् अङ्गवृत्तपरिभाषया वारणात् । न चैवमप्यन्त्यस्य स्यात् नानर्थके इति निषेधात् । त्यदादीनाम इति सिद्धे आरम्भसामर्थ्याच्च । न च कुतिहोरित्याद्यर्थं किम इति अन्यथेमः कुआदेश कद्वयं स्यादिति वाच्यम् । तत्रापि उतिहोरिति विन्यासात् । न चेहान्त्यस्योकारः स्यात्, नानर्थके इति निषेधादित्याशंक्याह अकच्सहितस्येति । किम इत्यस्याभावेऽकाचि टेरत्वे कक इति स्यादिति भावः । सिद्धान्ते तु तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति परिभाषया साकच्कस्य किम्शब्दत्वाद्रूपसिद्धिः ।

न च सुबन्तात्तद्धितोत्पत्त्या सुबुत्पत्त्यनन्तरं परत्वात्कादेशे ततोऽकचि कक्क इत्येव स्यादिति वाच्यम् । प्रातिपदिकादित्येवाधिकारात् । सुपः शब्देन निमित्तत्वेनाश्रयणादङ्गसंज्ञानिमित्तप्रत्ययानपेक्षणेन चाकचोऽन्तरंगत्वाच्च । ननु निर्दिश्यमानस्येति परिभाषया साकच्कस्य कथमादेश इति चेन्न । कादेशविधानसामर्थ्यात् आवृत्त्याश्रयणेन साकच्कस्यादेश इति कैयटोक्तेश्च । उक्तसामर्थ्यात्किम्शब्दे उक्तपरिभाषाया अप्रवृत्तिः । यत्तु सर्वत्राकज्विषये तस्याः अप्रवृत्तिरिति तत्तु न युक्तम् । भिन्धकीत्यत्राकचि कृते निर्दिश्यमानपरिभाषया हेर्धित्वं न प्राप्नोति हुझल्भ्य इत्यत्र भाष्यविरोधात् । नन्विद ए इति स्थिते स्मभावात्परत्वादनादेशोऽसकृद्गतिन्यायेन स्मै न स्यादत आह । नित्यत्वादिति । न च स्मैआदेशेऽनादेशः । हलि लोपेन बाधनात् । न च प्रवृत्तियोग्यत्वं नित्यत्वं तच्च बाधितेऽप्यस्तीति चेत् । लक्ष्यानुरोधेन बाधकाबाधितकृताकृतप्रसङ्गस्यैवात्राश्रयणादिति दिक् । नन्वत्वे हलि लोपेनाभ्यामित्यादेरनुदात्तत्वेनैव सिधावम्विधानं व्यर्थमत आह । साकच्कार्थमिति । शित्वात्सर्वादेश इति भावः । यद्यपीह शिद्ग्रहणं व्यर्थम् । आकारस्याकारविधानसामर्थ्यादेव सर्वादेशसिद्धेः । तथाप्यनुदात्तत्वार्थमेवाकारविधानमित्याशङ्का स्यात्तन्निवारणाय शिद्ग्रहणमिति केचित् । अन्ये तु अ अ इति प्रश्लेषेण सर्वादेशसिद्धेस्तद्ग्रहणं न कर्त्तव्यं तत्र समुदायस्यैवार्थवत्त्वात्तत एव विभक्तौ पूर्वस्यापदान्तत्वादतो गुणेन निर्देशसामर्थ्यादादेशप्रवृत्तिकाले अ अ इति समुदाय प्रस-

र्तत इत्याहुः, स्पष्टं चेदं भाष्ये । अचः परस्मिन्नित्यत्र पूर्वस्माद्विधाविति पञ्चमीसमासोऽप्यस्तीत्याशयेन शङ्कते । न चेति । पूर्वत्रेति । अत्र वीजं शब्देन्दुशेखरे निरूपितम् । वहिरङ्गे इति । असिद्धं वहिरङ्गमिति परिभाषयेत्यर्थः । अल्लोपो न इत्यस्य भसंज्ञायाः प्रकृतिप्रत्ययापेक्षत्वेन वहिरङ्गत्वम् । स्तोः श्चुनेत्यस्य वर्णद्वयापेक्षत्वेनान्तरङ्गत्वम् । तथा चेयं परिभाषा । संज्ञापरिभाषाविषये पक्षद्वयं यथोद्देशं संज्ञापरिभाषं कार्यकालं संज्ञापरिभाषं, दिशिरत्रोच्चारणाक्रियोऽधिकरणकार्थकश्च घञ्प्रत्ययः उद्दिश्यते उच्चार्यते यत्रासावुद्देशस्तमनतिक्रम्य वर्तते इति यथोद्देशम् । यद्देशे उद्दिश्यते तत्रैव वाक्यार्थबोधेन गृहीतशक्त्या गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहार इति यथोद्देशपक्षार्थः । अत एव परिभाषा एकदेशस्थिता सर्वं शास्त्रमभिज्वलयाति प्रदीपवदित्युक्तं समर्थसूत्रे महाभाष्ये । कार्येण काल्यते स्वसंनिधिं प्राप्यते, कार्येण स्वसंस्काराय स्ववृत्तिलिङ्गचिह्नितपरिभाषाणामाक्षेप इति यावत् । भाष्येऽपि यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यमित्युक्तमिति कार्यकालपदार्थः । तत्राद्यपक्षे तावत् समाधत्ते । यथोद्देशे इति । परिभाषया देशं निर्दिशति । पाष्ठीमिति । षष्ठे षष्ठाध्याये भवं षाष्ठं वाह ऊठ् सूत्रं तस्माज्जातामित्यर्थः । तद्यथा । विश्वौह इत्यादौ वस्य यजादिप्रत्ययनिमित्तभसंज्ञाश्रयत्वात् संप्रारणे संप्रसारणाच्चेति पूर्वरूपे पुगन्तेति गुणे वृद्धिरेचीति वृद्धौ रूपसिद्धावूठ्ग्रहणं व्यर्थं सञ्ज्ञापयत्येषा परिभाषाऽसिद्धं वहिरङ्गमिति । ननु पुगन्तेतिसूत्रे निमित्तमिको विशेषणमत एव भिनत्तीत्यादौ न गुणस्तथा च

नाजानन्तर्ये इति निषेधात् कथं परिभाषाप्रवृत्तिरिति चेन्न। प्रत्यय-स्याङ्गाकाङ्क्षित्वेनोपस्थितत्वात्तत्रैवान्वयात् । पुगन्तेत्यादौ कर्मधार-याश्रयणेन प्रत्ययपराङ्गावयवलघूपधरूपेको गुण इतीको गुणेत्यत्र भाष्यसंमतेऽर्थे भिनत्तीत्यादौ दोषाभावाच्च । न च वार्ष्यूह इत्या-दिरूपार्थं पृथग्ग्रहणम् । ज्ञापनपरभाष्यप्रामाण्येनानकारान्तेऽकारान्तो-पसर्गे चोपपदे वहेर्वाहेर्वाण्विविचोरनभिधानात् । धातूनामनेकार्थ-त्वेनोहयतेः क्विपि रूपसिद्धेश्चेति दिक् । तथा चेयं सपादसप्ता-ध्यायीस्था त्रिपाद्यां न प्रवर्तते पूर्वत्रासिद्धमित्यनेन त्रिपाद्या असिद्धेरित्याह अप्रवृत्तेरिति । नन्वस्तु तावदेवं कार्यकालपक्षे तु दोष एवेति चेन्न । पूर्वं प्रतिपरस्यासिद्धत्वेनान्तरङ्गाभावेन पूर्वस्या-न्तरङ्गनिरूपितबहिरङ्गत्वाभावात्तया तस्यासिद्धत्वप्रतिपादनासंभ-वात् । न चानया पूर्वस्यासिद्धत्वादभावेन पूर्वं प्रति परासिद्धत्वं पूर्वत्रेत्यनेन वक्तुमशक्यमितिवाच्यम् । एवं हि विनिगमनाविरहा-दुभयोरप्यप्रवृत्त्यापत्तेः । ननु कार्यकालपक्षेऽपि त्रिपाद्यां परिभाषा प्रवर्तत एवात एव नृकुट्यां भवो नार्कुटो नृपतेरपत्यं नार्पत्य इत्यादौ त्रिपादिस्थेऽन्तरङ्गे खरवसानयोरिति विसर्गे बहिरङ्गायास्त-द्धितेष्वचामादेरिति वृद्धेरसिद्धत्वमुक्तं विसर्जनीयसूत्रे भाष्ये । एवं चात्र पक्षे पपूर्वहनधृतराज्ञामणीति निर्देशेनास्याः परिभाषाया अनित्यत्वात्समाधेयमिति चेन्न । भाष्य एव पूर्वोक्तबहिरङ्गत्वादि-खंडनात् । तदुक्तम् । अयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वा-दिति । किञ्च उरण्सूत्रे रेफस्य पूर्वान्तत्वे विसर्जनीयप्रतिषेधो वक्तव्यो नार्करिपर्नार्कुट इत्याद्यर्थमित्यपूर्वं वचनमेवारब्धं भाष्ये ।

अत एव निगाल्यत इत्यादौ लत्वार्थन्तस्य दोष इति वचनम्। इतरथान्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वासिद्धौ नारभ्येत। किञ्च सौत्रनिर्देशाश्रयणमगतिकगतिः प्रतिदिवन्शब्दे निर्देशभावश्च तस्मात्पक्षद्वयेऽपि परिभाषाप्रवृत्त्यभावाददोष इत्याधिकं नागेशीये। अथ वृत्रघ्न इत्यादावेकाजुत्तरप्रातिपदिकान्तकुमतिचेति सूत्रैः प्राप्तं णत्वं निवर्त्तयितुं हंतेरत्पूर्वस्येति सूत्रेऽत्पूर्वस्येत्यंशो विभक्तो नियमरूपोऽपवादः स च येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति तत्र चास्ति पक्षद्वयं बाध्यसामान्यचिन्तापक्षो बाध्यविशेषचिन्तापक्षश्चेति तदुक्तं यदा लक्षणनिरपेक्षं कार्याणां बाधकत्वमिति दर्शनं तदा विध्यन्तरैरनाक्रान्तो विषयो नास्तीत्यविशेषात्सर्वकार्यबाध्यमित्याद्यः। 'यदा लक्षणम् बाध्यते इति दर्शनं तदा येन सर्वो विषय आक्रांतस्तदेव बाध्यते इत्यन्त्य इति उपसर्गस्यायताविक्त्यत्राष्टमे कैयटे। तत्रांत्यपक्षमूलकेनानन्तरस्येति न्यायेनात्पूर्वस्येति सूत्रं हंतेरेव बाधकमाद्यपक्षे तु सर्वेषामपीत्युभयोः समकक्षयोः पक्षयोः कतरो ग्राह्यस्तत्राह। योगविभागेति। ननु विभक्तसूत्रांशे 'उपसर्गस्थादित्यस्य निवृत्तिस्तत्फलमिति चेन्न। सामर्थ्यादेव तन्निवृत्तिसिद्धेः। अनन्तरस्येति। अत एव संख्याव्ययादेरिति ङीब्ग्रहणं चरितार्थम् तद्धि अनन्तरस्य ङीष्विधेरभावाय। किञ्च नक्तिचीति सूत्रे दीर्घग्रहणं चारितार्थम्। तद्व्यन्तारितस्यानुनासिकस्य क्विझलोः क्ङितीति दीर्घस्यानुदात्तोपदेशस्येत्यस्याभावायेति न्यायप्रचारः। न चैवं न षट्स्वस्रेति निषेधोऽनन्तरस्य ऋन्नेभ्य इति ङीप् एव

स्यान्न तु व्यवहितस्य टाप् इति वाच्यम् । तत्र स्वरितत्वप्रतिज्ञासामर्थ्येन तस्य न्यायस्य बाधितत्वात् । ननु विभक्तसूत्रस्य नियमरूपस्य विधिनिषेधरूपत्वाभावात्कथमत्र न्यायप्राप्तिरिति चेन्न । अन्यनिवृत्तिफलकसिद्धविषयकविधित्वमेव नियमत्वमित्यदोषात् । अत एव पंच पंचनखा भक्ष्या इत्यत्र भक्ष्यनियमेऽभक्ष्यप्रतिषेधो गम्यते इत्युक्तं पस्पशाया भाष्ये । अयञ्च न्यायः शिसर्वनामस्थानमित्यादिषु भाष्ये स्पष्टः । एकाजुत्तरेति । न चाल्लोपे एकाच्त्वं नास्तीति शंक्यम् । पंचमीसमासे स्थानिवत्वात् । न च पूर्वत्रासिद्धे तन्निषेधः । तस्य दोषः संयोगादिलत्वेत्युक्तेः । णत्वमपीति । अपि नाप्रातिपदिकान्त कुमति चेत्यनयोः संग्रहः । बाध्यसामान्यचिन्ताश्रयणात्सर्वेषां बाध इति भावः । न च कुमति चेत्यस्य सन्निपातपरिभाषयैवाप्राप्तिः । तस्या अनित्यत्वात् । इदमत्पूर्वग्रहणं हस्यानिकक्वगोभाववद्धन्तेरुपलक्षणमतो वहुवृत्रहाणीत्यत्र प्रघानि प्रघनाघन इत्यत्र च न दोष इति दिक् । अगारैकदेश इति सूत्रे प्रघणप्रघाणयोः कृतणत्वयोरुच्चारणमुपलक्षणार्थत्वे मानम् । माधवेनोक्तमिति । अल्लोपे उत्तरपदस्यानच्त्वादेकाजुत्तरेत्यस्याप्राप्तौ प्रातिपदिकान्तेति विकल्पो वृत्रघ्णो वृत्रघ्न इति तद्भावः । तद्भाष्येति । कुव्यवाये हादेशेषु णत्वप्रतिषेधो वक्तव्यः । वृत्रघ्नः स्रुघ्नप्राघानि हन्तेरत्पूर्वस्येत्यत्रात्पूर्वग्रहणं न कर्तव्यं भवतीति भाष्येत्यर्थः । एवञ्च भाष्यवार्तिकयोर्णत्वाभावे तात्पर्येण विरोधः स्पष्ट एव । एतच्च वार्तिकाशयवर्णनानुग्रहमात्रं न तु वस्तुस्थितिः वार्तिकेन

सूत्रावयवप्रत्याख्यानापेक्षया योगविभागमाश्रित्य वार्तिकार्थोप-संग्रहस्यैव व्याप्यत्वात्स चोपलक्षणार्थत्वेनोपसंगृहीतः । हादेश-कवर्गव्यवाये इत्यर्थे आर्षत्वात्समास इति दिक् । ननु कुर्वन्नि-त्यादाविव संयोगान्तलोपस्यासिद्धत्वेन नान्तत्वाभावात्सर्वनामेतिदी-र्घत्वं न स्यादित्याशंक्याह । इहेति । बहुलग्रहणादिति । बहू-नर्थान् लाति आदत्ते इति योगेन क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषाक्वचिदन्यदेवेत्यभियुक्तोक्तेषु चतुर्विधार्थेषु क्वचिदन्य-देवेत्यर्थस्यात्र पूर्वं प्रति परं नासिद्धमिति विवक्षितत्वात् । ननु क्वचित्पदस्वारस्येन स्थलविशेषनियामितत्वात्कथमेकत्र युगपदर्थ-द्वयं विकल्पोऽसिद्धत्वाभावश्चेति चेन्न क्वचित्प्रयोजने इत्यर्थात् । असिद्धत्वभावकल्पने मानमाह तथा चेति । श्वन्नुक्षन् पूषन् प्लीहन् क्लेहन् स्नेहन् मूर्द्धन् मज्जन् अर्यमन् विश्वप्सन् परिज्मन् मातरिश्वन् मघवन्नित्युणादिसूत्रेण महेर्हस्य घोऽवुगागमः कनिप्रत्यय इति त्रितयस्य निपातनादित्यर्थः । प्रकारान्तरमाह । मघशब्दादिति । धनार्थकादित्यर्थः । मतुपो मस्य वः । प्रत्याख्यातमाकर इति । केशाद्व इत्यत्र पंचमे कैयटे । तद्यथा । मघवाबहुलमित्येतन्न कर्त्तव्यं श्वन्नुक्षन्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयस्य सिद्धत्वात् । तथा च मतुप्पक्षेऽत्वसन्तस्य चाधा-तोरिति दीर्घसत्त्वेन त्रादेशपक्षेऽपि दीर्घो युक्तः । अन्यथा फल-भेदे प्रत्याख्यानासंभवादिति भावः । ननु अन्तोदात्तस्य त्रादेशे वकाराकारस्योदात्तत्वं भवति ॥ मतुपि तु ह्रस्व नुड्भ्यामिति प्राप्त-मतुबुदात्तत्वस्य नगोऽश्वन्निति निषेधेन पित्वादनुदात्तत्वे घोत्त-

राकारस्योदात्तत्वमित्यस्त्येव फलभेद इति चेन्न आदेशपक्षेऽपि दीर्घवत् बहुलग्रहणेन वोत्तराकारस्योदात्तत्वाङ्गीकारात् । ननु आदेशपक्षे मघवानस्ति यस्यामित्यर्थे मतुप्युगितश्चेति ङीपि मघवत्वतीति प्रयोगो निष्पद्यते । मतुप्पक्षे तु न शैषिकान्मतुवर्थीयाच्छैषिको मतुवर्थिकः सरूपः प्रत्ययोनेष्टः सन्नन्तान्न सनिष्यत इति सन्दृत्रमाष्यसिद्धान्ताद् मतुवन्तान्मतुपोऽप्रवृत्तेरिति चेन्न । तादृशप्रयोगस्यानभिधानात् । ननु सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखा सहस्रवर्त्मा सामवेदः एकविंशतिधा बाह्वृच्यं नवधाथर्वणो वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः एतावंतं शब्दस्य प्रयोगविषयमननुनिशम्य सन्त्यप्रयुक्ता इति वचनं केवलं साहसमात्रमेवेति पस्पशायां भाष्योक्तः कथमनभिधानमिति चेन्नैष दोषः । यतो हि अनभिधानं तस्माच्छिष्टलोकस्य बोधाभावरूपमिति ब्रूमः । एवं च द्वयी विवक्षा प्रायोगी लौकिकी चेत्यादिना तदस्यास्त्यस्मिन्नित्यत्र भाष्ये कैयटे च स्पष्टम् । शिष्टाश्च शब्दतत्त्वविद इत्यपि पृषोदरादिसूत्रे स्पष्टं भाष्ये बोधनिश्चयश्च कोशादित्यलमाकरव्यतिकरकल्पनया । ननु व्यथो । लिटीत्यस्य श्युवेत्यस्य च प्रदेशान्तरस्यस्य कथमनेन निषेध इति चेन्न । संप्रसारणमित्यस्यानुवृत्त्यैव सिद्धे पुनः संप्रसारणग्रहणसामर्थ्यान्निषेधः । न च व्यथो लिटचादावस्य चारितार्थ्येन शून इत्यादौ पूर्वसवर्णदीर्घैकादेशे तस्याचः परस्मिन्निति स्थानिवत्त्वेन संप्रसारणत्वेऽपि तेनैव स्थानिवत्त्वेनोकारव्यवधानात्कथमनेन निषेध इति शंक्यम् । व्यथ इति सूत्रे यग्रह-

णेनैव सिद्धौ संप्रसारणग्रहणस्यैतन्निषेधकतयैव चारितार्थ्यस्य वक्तव्यत्वेन व्यवहितेऽपि प्रवृत्तेर्यूनस्तिरिति निर्देशाच्चेत्याशयेनाह । यकारस्य नेत्वमिति । न चेदं व्यर्थम् इग्यण इत्युपस्थितस्य पदैकवाक्यतयान्वये निमित्तस्य यणाऽन्वयेन येन नाव्यवधानमिति न्यायेन पूर्वस्य संप्रसारणप्राप्तेरिति वाच्यम् । पदैकवाक्यतापक्षेऽपि संज्ञासूत्राणां वाक्यभेदेनैव संबन्धस्यान्यत्र प्रपंचितत्वाद्विधायकेषु यण इत्यस्याभावादिदमप्यत्र ज्ञापकम् । ननु सकृद्गताविति न्यायेनोभयोः संप्रसारणे जाते निषेधो व्यर्थो निमित्तत्वानुपपत्तिश्चेत्यत आह । अत एव ज्ञापकादिति । तदुक्तं भाष्ये इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबंधेनाचार्याणामभिप्रायो गम्यते एतदेव ज्ञापयति परस्य पूर्वं भविष्यतीति । ननु लक्ष्ये लक्षणस्येति न्यायेन कथं पुनः प्रवृत्तिरिति चेन्न । कार्याश्रयभेदेन लक्ष्यभेदादिति तिङन्ते निरूपयिष्यते । ननु ऋधातोर्विचि गुणे मतुप्यवन्तावित्यादि स्यादादिपद्यतीत्यादिना वनिपि अर्वेत्यपि छन्दसीवनिपाविति वेदेऽप्यर्वेति च सिध्यतीति किमर्थं सूत्रमित्याशंक्य नान्ततान्तयोः सर्वत्र प्रयोगे प्राप्ते सौपरे नञ्युपपदे च नान्तस्य प्रयोगो भवत्यन्यत्र तु नान्तस्य नेति व्यवस्थापनायेदं सूत्रं तृज्वत्क्रोष्टुरित्यादिवदित्यस्तु । तत्रानञ इत्यस्य को व्यावर्त्य इति पृच्छति । अनञः किमिति । उत्तरयति । अनर्वेति । यज्वशब्दसदृशोऽनर्वशब्दो व्यावर्त्य इति दिक् । नन्वस्थिदधीत्यत्रोदात्ततयोच्चारणं कर्त्तव्ये उदात्तग्रहणेन गुणा अभेदका इति ज्ञाप्यते तथा चात्र निरनुनासिकोच्चारणेऽपि तपरसूत्रस्यानणि विधीयमानेऽपि

अणूप्रत्यययोरनुवृत्तौ नियामकाभावाद्विध्यर्थत्वेनान्तरतम्याच्च नकारस्यानुनासिकः स्यादत आह । आ आदिति । ननु परस्मैपदाना णलतुसित्यत्राकारप्रश्लेषादनेकाल्त्वेन यस्य सर्वादेशवदत्रापि सर्वादेशः स्यादिति चेन्न । अत्र विशेष्यविशेषणभावान्वयेन विधेयत्वात् । वस्तुगत्या नात्र प्रश्लेषक्लेशः कार्यः अन्यथैवोपपत्तेः । तथाहि । भाष्यसमाजग्रस्तगुणाभेदकजातिपक्षाभ्यां प्राप्तस्य सवर्णग्रहस्याप्रत्ययग्रहणेन निषेधात् । भाव्यमानः सवर्णान्न गृह्णातीति निषेधाच्च । न च भाव्यमानोऽण् इत्यादिपाठादनाकारस्यानण्त्वान्न निषेध इति वाच्यम् । अप्रत्ययग्रहणेनाणुदित्सूत्रे परिभाषां ज्ञापयता भाष्यकृता अण्घटितपाठस्यानुक्तत्वात् । न च चोः कुरित्यत्राग्राहकतापत्तिः । उदित्करणसामर्थ्यात् । एतेन गुणाभेदकत्वप्राप्तस्य न निषेधः । अत एव यवलपर इति वार्त्तिके नानुनासिकयकारादिविधानं न विरुध्यत इति मन्दोक्तमपास्तम् । तेन निरनुनासिकानां यादीनां च विधानस्य सिद्धान्तितत्वादिति स्पष्टमुद्योते । ननु अष्टन आ विभक्तावित्यत्रापि शुद्धोच्चारणसामर्थ्यान्नानुनासिक इति चेन्न । रायो हलीत्युत्तरत्रानुवृत्त्या चारितार्थ्यात् । न च तत्रापि प्रश्लेषः शब्दतोऽनुनासिकव्यावृत्तेरलाभात् गुणाभेदकत्वेनान्तरतम्यादनुनासिकस्य दुर्निवारत्वात् प्रश्लेषस्तु पर्यायेण सकलाकारविधानार्थः । तस्मादनण्त्वान्नानुनासिक इति बोध्यम् । स्पष्टं चेदं भाष्ये । इह तु भाष्यकारा अनुनासिकविधाने हि प्रतिपत्तिलाघवाय तस्यैवोच्चारणे कार्ये तदनुच्चारणाच्छुद्धस्यैव विधानं भविष्यतीति युक्त्यन्तरमेवाभिदधिरे । एतेन पर्यावतः शिपि

एकदेशविकृतन्यायेन पथीत्यस्याप्यात्वे न्थादेशे पन्था इत्यपास्तम् । अत्र शुद्धार्थे तदनुच्चारणेऽप्यावश्यकत्वेन भाष्यासंगतेरस्यानभिधानस्यैव युक्तत्वात् । नन्वादित्येवास्तां नकारेकारयोरत्वे सवर्णदीर्घेण समीहितरूपसिद्धेः । न च पररूपापत्तिः । पथिमथ्यृभुक्षां लोपः भस्य टेः इतोऽत्सर्वनामस्थान इति न्यासेन नकारश्रवणासिद्धावकारविधानसामर्थ्यादिति चेन्मैवम् । ज्ञानगौरवपरिहारेण स्पष्टार्थमाकारकरणात् । न च सिद्धान्तेऽप्यादित्यनुवृत्त्यैव सिद्धेरितोऽदित्यत्रात्करणं व्यर्थम् । ऋभुक्षणमिन्द्रमिति श्रुतौ वा षपूर्वस्य निगमे इति सूत्रेण दीर्घविकल्पे ह्रस्वश्रवणफलकत्वादिति दिक् ।

ननु विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः इत्यमरोक्तेरेकवचनस्यैव लाभ इत्याशंक्यानुद्भूतावयवभेदे समूहार्थाभिप्रायेण तदुक्तावप्युद्भूतावयवभेदसमुदायार्थे । द्विवचनादेरपि भाष्यसंमतत्वाल्लाभादत आह शतानीत्यादि । संनिपातेति इदं स्पष्टं भाष्ये । लक्षणप्रतिपदोक्तपरिभाषया न लुगित्यन्ये । गौणत्वे तु न लुग्नुटाविति । षड्भ्यो लुक् षट्चतुर्भ्यश्च अष्टाभ्य औशित्यादिषु बहुवचननिर्देशस्यार्थप्राधान्यबोधकत्वेन षडाद्यर्थगतसंख्याभिधायीत्याद्यर्थे गौणे तदप्रवृत्तेरिति नव्याः । अन्ये तु षड्भ्य इत्यादिषु बहुवचनं नोक्तार्थसाधकम्, तिसृभ्यो जस इतिवत्सिद्धार्थकत्वात् । सर्वत्र जातिनिर्देशस्यानौचित्यात् तेषां बहुत्वाच्च बहुवचनान्तानां सञ्ज्ञाबोधकत्वेनोपपत्तेश्च, किन्तु सर्वत्र विहितविशेषणम् । परमपंचादीनामपि संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन संख्यावाचितया षट्त्वमस्त्येव । लोके गणनायां

प्रसिद्धानामेव ग्रहणमित्यत्र तु न मानम् । उपसर्जनत्वेऽतिक्रांतार्थस्य प्राधान्यं न तु संख्याया इति न दोषः । षडित्यन्वर्थसंज्ञया न गौणे इत्यप्यसंगतम् । प्रियपंचा द्रौपदीत्यत्र न षडिति टाब्निषेधानापत्तेः । सर्वनामसंज्ञावदत्रोपसर्जनप्रतिषेधानारंभाच्चेत्याहुः । ननु ष्णान्ता षडिति विन्यासेन चतुःशब्दस्याप्यस्तु षट्संज्ञैव । चत्वार इत्यत्र लुग्न षड्भ्यो लुगर इति न्यासात् । ननु लाघवाभावः षट्चतुर्भ्यश्च षट्त्रिचतुर्भ्यो हलादिरित्यनयोश्चतुःशब्दस्यानिवेशादिति चिन्त्यम् । अष्टानामित्यत्र नित्यत्वान्नुटः प्रागात्वेनान्तत्वेन संज्ञाभावान्नुटोऽप्रवृत्तिरित्याशंक्य रायो हलीत्यस्माद्धलीत्यपकृष्टम् अत एव हलीत्युभयोः शेष इत्युक्तं ष्णान्तेति सूत्रे भाष्ये तथा च जश्शसोर्विषये आत्वस्याप्रवृत्तेः कृताकारादित्यनुपपन्नमत आह कृतात्वेति । तदनुकरणमित्यर्थः । लक्षणवशसंपन्नत्वे हि तस्य वैकल्पिकतया लाघवादष्टभ्य इत्येव वदेदिति भावः । सूत्रे इति । दीर्घान्तादष्टनः परा सर्वनामस्थानविभक्तिरुदात्ता स्यादिति तदर्थः । ज्ञापकादिति । तद्धि अष्टभिरिति ह्रस्वेऽन्तोदात्तनिवृत्त्यर्थम् । तथा च ह्रस्वनिवृत्त्यर्थं क्रियमाणं दीर्घग्रहणमात्ववैकल्पिकत्वे ज्ञापकम् । नन्वष्टाभिरित्यत्र दीर्घे लब्धावसरस्याष्टन इति सूत्रस्याष्टाभिरित्यत्र परत्वाज्झल्युपोत्तममित्यनेन षट्त्रिचतुर्भ्यो या हलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यादित्यर्थकेन बाधे सकृद्गताविति न्यायेन पुनः प्रवृत्ती व्यर्थमेव दीर्घग्रहणम् । अष्टाभिरित्यत्र झल्युपोत्तममिति तु न भवति कार्यकालपक्षेऽनान्तत्वेन षट्त्वाभावादल्विधित्वेन स्थानिवद्भावाभा-

वाच्चेति चेन्न । पुनः प्रसङ्गबोधद्वारेणैतद्विषये यथोद्देशपक्षस्यैवाश्रयणबोधनद्वारेण चात्वविकल्पे ज्ञापकं तद्ग्रहणमित्याशयात् । कुतः पुनरपवादत्वे परत्वचर्चा । न चाष्टौ पश्येत्यत्राष्टन् स्वरः सावकाशः न ह्यत्र षट्स्वरो लभ्यते हलादित्वाभावादिति वाच्यम् । एतद्भाष्यप्रामाण्यादेवाष्टन्शब्दस्य घृतादिपाठादन्तोदात्तत्वेनैकादेश उदात्ते नोदात्त इत्येव तत्रान्तोदात्तत्वसिद्धेः । ननु षट्स्वरविधायके विहितविशेषणाश्रयणेन समासे गौणे च तदप्राप्तेः प्रियाष्टाभ्यामित्यादावष्टन्स्वरश्चरितार्थ इति चेन्न । एतज्ज्ञापकपरभाष्यमाहिम्नाष्टन इत्यस्यापि विहितविशेषणेन समासादावप्रवृत्तेः प्रियाष्टादीनामनभिधानस्य षट्संज्ञासूत्रभाष्ये स्पष्टमुक्तत्वाच्चेति दिक् । गौणत्वेति । अष्टाभ्य इति बहुवचननिर्देशेनार्थप्राधान्ये तत्प्रवृत्तेः अन्यथा हि कृतात्वानुकरणेऽपि एकवचनेनैव निर्दिशेत् अष्टा औश् अष्ट औश् इति वा आत इति योगविभागेनाकारलोपात् । तथा चौश्त्वविधौ कृतात्वनिर्देशबलेनानुमीयमानमात्वमपि प्राधान्य एवोचितमत एव वक्ष्यति न गौणतायामिति नव्यमतम् । पूर्वस्मादपीति । न च पूर्वत्रासिद्धे इति निषेधस्तस्य दोषः इत्युक्तेः । न च तत्र संयोगादिलोपसाहचर्याल्लत्वस्येव णत्वांशेऽपि प्रतिपदोक्तपरिभाषया रषाभ्यामिति निष्पन्नस्य णत्वस्य निषेध इति वाच्यम् । रषाभ्यामित्यत्रापदान्तस्य मूर्द्धन्य इतिसूत्रमनुवर्त्य णग्रहणं पदान्तस्येति निषेधसूत्रं च प्रत्याख्यातं भाष्यकृता तन्मते ष्टुत्वमूर्धन्यशब्दानिर्वर्त्यमानणकारे वैषम्याभावादुक्तपरिभाषाया अप्रवृत्तेः कार्यकालपक्ष इति । अत्रापि पक्षे

त्रिपाद्यां परिभाषाप्रवृत्तिरित्यभिमन्तुरर्वाचीन मतेनेदम् अत्र वक्तव्यं राज्ञ इत्यत्रोक्तम् । अथ बहुवचनं नोपसर्जननिवारकमित्युक्तम्, अष्टन आ विभक्तावित्यत्र विहितविशेषणेनोपसर्जने दोषाभावः प्रियाष्टदी-नामनभिधानमेव वेति ष्णान्तेत्यत्र स्पष्टं भाष्ये अत एवाष्टाभ्य इति सूत्रे विभाषा आत्वं यदयमात्वभूतस्य ग्रहणं करोत्यष्टाभ्य इत्यन्यथाष्टन इत्येव कुर्यादित्युक्तं भाष्ये । पूर्वमते तु गौणे प्रवृत्त्य-भावाय बहुवचननिर्देशस्यावश्यकतया भाष्यासंगतिरित्यधिकं नागेशीये । सूत्रान्तर्गतमलक्षणसिद्धं साधयितुमाह निपात-नादिति । ऋताद्युपपदे यजेः क्विन् धृष्णोतेर्द्वित्वमन्तोदात्तत्वश्च सृजेः कर्मणि क्विनुमागमश्च दिशेः कर्मणि उत्पूर्वात्स्निहेश्च क्विन् उपसर्गात्तलोपः षत्वञ्च अंचेस्सुप्युपपदे क्विन्नित्यर्थः । निरुपप-दादिति । युजेरसमासे इत्यसमासे नुमो विधानेन सोपपदात् चोः कुरिति सिद्धत्वेन क्विनि क्विपि च विशेषाभावादिति भावः । कना-विताविति । उपलक्षणं चैतत् उच्चारणार्थेकारस्यापि तत्रापि तस्य लोप इति प्रवृत्तेर्लोपात् उच्चारणार्थानां विनेवशास्त्रमपगमस्तु न इत्संज्ञकानामपि तथैव सिद्धेस्तस्य लोप इत्यस्य वैयर्थ्यापत्तेः । न चात्र घेरित्यादिविहितयोरदौतोर्न विभक्काविति निषेधापत्तिरिति वाच्यम् । इदमस्थमुरिति मकारपरित्राणाय कृतेनोकारेण तस्या-नित्यत्वज्ञापनादित्यन्यत्र विस्तर इत्याहुः । धातुपाठ इति । व्याख्यानादिति भावः । अन्ये तु पूर्वोत्तराभ्यामञ्चुकुञ्चाभ्यां परस्मै-पदिभ्यां साहचर्यात्कर्तरि संभवत्परस्मैपदिकस्य ग्रहे पाक्षिकत्स्य तस्य युजिर्योग इत्यस्यैव संभवादस्यैव ग्रहणम् एतदुपजीवकत्वेन

ग्रुजेरसमासे इत्यत्राप्यस्यैव ग्रहणमित्येतद्ध्वनयन्नाह आत्मनेपदीति इत्याहुः । फणादिरेवेति । न च श्तिपा शपानुबन्धनेन निर्दिष्टमिति गणनिर्दिष्टत्वाद्यङ्लुगन्ते राराष्टीति न स्यादिति वाच्यम् । तस्य छान्दसत्वेनादोषादित्याहुः । त्यदादीनामित्यनुवृत्तौ तत्र चोक्तां भाष्येष्टिं स्मारयति द्विपर्यन्तानामिति उच्चारणेति । त्वाहौ सावित्यत्रेत्यर्थः । चरितार्थत्वादिति । गौणेऽन्तरङ्गकार्यत्वात्सत्वन्न । त्वाहावित्युक्तेऽतित्वामिति स्यादिति भावः । तदाहात्वसत्वेनेति । तयोरन्तरङ्गकार्यत्वात् । ननु किमर्थमनन्त्ययोरिति हे स इत्यादिसाधनार्थमन्यथा परत्वात्त्यदाद्यत्वं बाधित्वा दस्य से सति हल्ङ्यादिना सुलोपे रुत्वविसर्गयोर्हे स इति सविसर्गं स्यात् किञ्च स्त्रियां सेति न स्यात् । वस्तुतोऽन्त्यस्य सकारेऽपि पुनः प्रसङ्गविज्ञानात्सिद्धमिति न्यायेन सस्य त्यदाद्यत्वे रूपसिद्धिः । सकृद्गताविति स्वीकारेऽपि तदोः सः सावित्यनन्तरमदस इति योगं विभज्यादस एव दस्य सत्वं नान्यस्य दस्येति व्याख्ययाप्युक्तसिद्धिरिति अदृष्टार्थफलकमनन्त्ययोरिति । स्यादेतत् । तोः सः साविति सूत्र्यतां, नैतत् । अनेष इत्यादौ तवर्गीयनस्य सत्वापत्तेः । न च नुड्विधानसामर्थ्यम् । अनश्व इत्यादौ कृतार्थत्वात् । ननु परित्यज्य तस्मादिति पदं नुगचीति सूत्र्यताम् एवन्तर्हि न लोपः प्रातिपदिकान्तस्येति नलोपापत्तेः । विधानसामर्थ्यान्न नलोप इति चेत् । एवमपि ङमो ह्रस्वादचि ङमुट् स्यादिति । तस्मादिति कर्त्तव्यमेव । टिदनुबन्धश्चेति यथान्यासमेवास्तु । कैयटस्तु तोरित्युक्तेऽपि अनेष इत्यादौ नुडागमस्य पदद्वयापेक्षत्वादिति चिन्त्यमेव

चिन्त्यमिति परिचस्करुः। ननु यद्यपि त्वमावेकवचने इति युष्मदः सिद्धस्त्वादेश इति त्वाहावित्यत्र त्वग्रहणमनर्थकं तथापि युष्मानतिक्रान्तोऽतित्वमित्यत्र युष्मदोऽनेकार्थस्त्वादिविधानार्थमेकत्रोपसर्जने चरितार्थत्वात्केवले परत्वात्त्वममाभ्यां बाध इति न वाच्यम् । त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधत इति वक्ष्यमाणत्वात् । तत्र मपर्यन्तस्यादेशे शेषे लोप इति दस्य लोपेऽजन्तादेशपक्षेऽतो गुणे हलन्तादेशपक्षे तदभावेऽप्यदन्तत्वादजाद्यत इति टापमाशंक्य नन्वित्यादिना । अन्तरङ्गत्वादिति । परनिमित्तानपेक्षत्वेन टापोऽन्तरङ्गत्वमिति भावः । ङेप्रथमयोरित्यत्र युष्मानित्यत्र तस्माच्छसो न इति नत्वमिति भाष्येण लिङ्गबोधनात् साम आकमित्यत्रालिङ्गे युष्मदस्मदी इत्यपि भाष्येण लिङ्गाभावस्य बोधनादुक्तदोषमर्द्धमङ्गीकरोति सत्यमिति । अलिंगे इति । इयं भाष्योक्तिः । न टाविति । इदं साम इत्यत्र स्पष्टं भाष्ये । नन्वलिंगे इति भाष्यस्य पदान्तरसन्निधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दमात्रान्न प्रतीयते । इत्यर्थादस्त्येव लिङ्गत्वमत एव त्रिलिङ्ग्यामनयोः प्रयोगा न विरुध्यन्ते न वा शिशीनुमलुग्विधिभ्यो युष्मदस्मदादेशा विभक्त्यादेशाद् विप्रतिषेधेनेति नेतराच्छन्दसीति सूत्रस्थवार्त्तिकभाष्यवचनानीत्यत आह यद्वेति । इदं च साम आकं त्यदादीनामित्यनयोर्व्यक्तं भाष्ये । यद्यपि शेष इति विभक्तिविशेषणे च विषये आत्वयत्वाभ्यां विशेषविहिताभ्यां लोपस्य बाधनाद्व्यर्थमेव तथापि तत्सार्थक्याय तेन प्रकृतिं विशेष्य समाधत्ते व्याधि-

करणत्वेत्यादिना । वृक्षस्य शाखेति युक्ते वृक्षे शाखेति वच्छेपस्येति वाच्ये शेषे इत्युच्यते । सप्तम्यर्थं पक्षेऽवशिष्टेऽन्तस्य दस्य लोप इह तु सर्वस्य तदाह अत्शब्दस्येति । एवमप्यदन्तत्वमस्त्येवात आहान्तरङ्ग इति । अन्तरपेक्षत्वेनास्य तत् वलोपस्य तु वहिर्भूतविभक्तिनिमित्तकत्वेन वहिरङ्गत्वमित्यर्थः । फलितमाह अदन्तत्वाभावादिति । ननु वार्णादाङ्गम्वलीय इति परिभाषया पररूपात्पूर्वमेव टिलोपस्तत्कथमदन्तत्वाभाव इति चेन्न । तस्या अनित्यत्त्वाङ्गीकारात् । अत्र च्छ्वोः शूडिति सूत्रे सतुक्निर्देशो ज्ञापकः । अन्यथाङ्गत्वापूर्त्वे तु कः शादेशे तु कोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः । सर्वमेतददन्तादेशपक्षे हलन्तादेशसर्वलोपपक्षयोस्तु टापो प्राप्तिरेवेति स्पष्टमाकरे । अन्ये तु बुद्धावित्यत्राच्च घेरित्यादौ तोः कृतयोः सन्निपातपरिभाषया टाव् नेति यथा कृन्मेजन्त इत्यत्र भाष्ये समाख्यातं तथात्राप्यस्तु किमुक्तातिक्लेशकल्पनयेत्याहुः । मपर्यन्तस्य किमिति । अधिकारसूत्रं किमर्थमिति प्रश्नः । अकस्साहितस्य तन्मध्यपतितन्यायेनादेशः स्यादित्युत्तरमाति युवकामिति । ननु समुदायादेशत्वेऽपि युष्मदस्मद्विषये त्वयकेत्यादिसिद्धये ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकजन्यत्र तु सुवन्तस्य टेः प्रागिति व्यवस्थाया वक्ष्यमाणत्वेनान्तरङ्गत्वाद्युवामित्यादि सिद्धचुत्तरमकजिति नोक्तरूपासङ्गतिरित्यस्वरसादाह त्वयेत्यादि । अन्विशिष्टस्यादेशे यकारान्तादेशे च रूपासिद्धिरिति भावः । ननु योऽचीति सूत्रमच्ये इति विन्यस्याचि परे एकारादेशेऽयादेशे

चोक्तरूपस्य नासङ्गतिरित्यपरितोषादाह युवकाभ्यामित्यादि । उक्तव्यवस्थया भकारादौ सर्वनाम्नष्टेरकजित्यस्य श्रवणानापत्तेरिति भावः । ननु किमः कादेशविधानं न सर्वत्राकज्विषये निर्दिश्य-मानपरिभाषानिवृत्तेर्ज्ञापकं किन्तु किंशब्दमात्रविषयेऽत एव भिन्ध-कीत्यत्राकचि कृते निर्दिश्यमानपरिभाषया हेर्धित्वं न प्राप्नोतीत्युक्तं हुझल्भ्य इत्यत्र षष्ठे भाष्ये । एवं चोक्तपरिभाषया युवकाभ्यामित्या-दावकच्छ्रुतिरव्याहतैव अधिकारसूत्रस्य त्वादयो हलन्ता इति पक्षे त्वयेत्यादेरसिद्धिरादेशस्य सर्वादेशत्वं च न स्यात्तन्निवृत्तिरेव फलमिति चेन्न । अदन्तादेशपक्षे दोषाभावात् । नन्वेवं तर्हि मान्तस्येत्येवास्तु मैवम् । युष्मयतः क्विपि सुप्यादेशाभावार्थं तत्करणात् । पर्यन्त-शब्देन मान्तापेक्षया शेषस्य लाभात् । कटिपर्यन्तं वास इत्युक्ते-ऽग्रे किंचिदस्तीति नियमेन प्रतीतेरेवं च मान्ताद्यत्राग्रे किञ्चि-दवशिष्टं तत्रैवादेशा इति क्विपि नादेश इति सर्वमत्रैव स्पष्टं भाष्ये । हलन्तादेशटिलोपपक्षयोर्यूयमित्यादौ दोषाभावेऽप्यन्यत्र पक्षे दोषमुद्भावयति इहेति । अङ्गकार्ये इति । एतेनाङ्गवृत्ते पुनर्वृत्तावविधिरिति परिभाषार्थत उपनिबद्धा । अङ्गेऽङ्गाधिकारे वृत्तं वर्तनं यस्य तदङ्गवृत्तं शास्त्रं तस्मिन्वृत्ते सति पुनरङ्गस्या-ङ्गवृत्तशास्त्रस्य प्रवृत्तौ प्राप्तायामविधिरिति तदर्थः । इयं च भाष्ये स्पष्टा । तद्यथा ज्यादादीयस इत्यत्रान्मास्तु बहोर्लोप इत्यतो लोपानुवर्तनेनाकृत्सार्वेति दीर्घेण सिद्धं ज्यायानिति । ज्ञाजनोर्जेत्यत्र ह्रस्वोऽस्तु • अतो दीर्घो यञीति दीर्घे सिद्धं जायते जानातीति एवं सिद्धे यदाकारं करोति तज्ज्ञापय-

त्याचार्यो भवत्येषा परिभाषाङ्गवृत्तोति। अनित्या चेयं द्वयोरेकस्येत्यादिनिर्देशात्। तस्या अङ्गसम्बन्धिकार्यविषयत्वात् प्रकृते प्रवृत्त्यभावाद्वेत्यस्वरसादाह। मकारान्तरमिति। शसो नेत्यनेन संहितया पाठे इति शेषः। इदमुपलक्षणम्। जसः शीत्यत्र जसः स इति सकारं प्रश्लिष्य सांतस्य जस इति व्याख्यानादतोऽमित्यतोऽमित्यनुवर्त्यामममेवेति व्याख्यानाद्वेति बोध्यम्। अन्ये तु शेषविभक्तिभूतामादियुष्मदादिसन्निपातेन जातस्य लोपस्य तद्विघातकश्यादिनिमित्तत्वं नेति सन्निपातपरिभाषयैव श्याद्यभावः। सुटस्त्वाकमवयवत्वान्न तेन सन्निपातविघात इति सकारनिर्देशः साम आकामित्यत्र। मूलोक्तं तु न युक्तम्। अत एव नेतराच्छन्दसीसि सूत्रे नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेनेति वार्तिकं व्याख्याय कृतेषु पुनः प्रसङ्गाच्छिशीलुग्विधेयः कस्मान्न भवति। सकृद्गतिन्यायादित्युक्तम्। सर्वमते पुनः प्रसङ्गस्यैवाभावेन भाष्यासंगतिरित्याहुः। वस्तुगत्या नहि अमुलोपस्य निमित्तं किं तर्हि शेषत्वं तच्चास्त्येव कृतेऽपि शीभावे इति नोक्तपरिभाषाविषयः। अत एव यूयं ब्राह्मणकुलानीत्यत्रामुभावे कृते सकृद्गतिन्यायाश्रयणाज्जश्शसोः शिरिति शिभावो नेति भाष्योक्तं संगच्छते। त्वन्मते सन्निपातपरिभाषयैव शीभावाप्रसक्तेर्भाष्यासंगतिः। तदुक्तभाष्यविरोधस्तु नास्त्येव उपायस्योपायान्तरादूषकत्वात्। तस्मान्मूलोक्तमेव युक्तमिति वदन्ति। भ्यसोऽभ्यमित्यत्र भाष्ये संदेहो भवति भ्यम् अभ्यम् वा, यदि भ्यमादेशः शेषे लोपान्त्यलोप इत्येवं प्राप्नोति अथाभ्यमादेशः

शेषे लोपष्टिलोप इत्यन्तस्योदात्तनिवृत्तिस्वरः प्राप्नोतीति यथेच्छसि तथास्तु इत्युक्तं तदाह आद्य इत्यादि । अङ्गवृत्त इत्यस्य अनित्यत्वे प्राप्तौ वा संनिपातपरिभाषयोक्तरीत्या वारणीयमेत्वं पक्षद्वयेऽपीति न चान्त्यलोपपक्षे स्वरूपं बाधित्वा सवर्णदीर्घः स्यादकारोच्चारणसामर्थ्यादिति वाच्यम् । एत्वनिवृत्त्या चरितार्थत्वात् । न चाङ्गवृत्त इत्यनयैव वारणे सिद्धेऽकारो व्यर्थ इति शंक्यम् । तस्या अनित्यत्वज्ञापनार्थत्वात् । तत्रान्त्यलोपे द्वयोरकारयोः पररूपे एकादेश उदात्तेनोदात्त इत्यनेनाभ्यम आद्याकार उदात्तष्टिलोपेऽपि अनुदात्तस्य च यत्रेत्यनेन यत्रानुदात्ते वर्णे परे उदात्तो लुप्यते सवर्ण उदात्त इत्यर्थ केनोदात्त एवेति न विशेषः । वस्तुत इहाभ्यमेवादेशो भाष्याभिप्रेतः अत एव युष्मदस्मदोरनादेश इत्यत्र न चादेशो हलादिरस्तीति भाष्योक्तं संगच्छते । उक्तभाष्यस्य त्वयमर्थस्त्व यथेच्छसि तथास्तु तत्र दोषोद्धारो मया सुकर इत्येकदेशिनं प्रत्युक्तिरिति । एवं च टिलोपपक्षोऽपि व्यर्थः शेषग्रहणं तु प्रत्याख्यातमेव भाष्ये । ननु यद्यपि योऽचीत्यत्राङ्ग्रहणाभावे युवाभ्यामित्यादौ दोषस्तथापि युष्मदस्मदोरनादेश इति सूत्रे रायो हलीत्यतो हलीत्यनुवर्तनेन पारिशेष्यादत्राच्येव प्रवृत्तेरचीत्यस्य वैयर्थ्येऽपि विशेषविहितत्वादाकमादेशात्पूर्वमनादेशत्वाद्यत्वेन भाव्य ततश्च शेषे लोपाभावे हलन्तत्वात्सुटोऽप्रसक्त्या साम इति निर्देशो व्यर्थ इत्यत आह भाविन इति । आकमि शेषे लोपे कृते प्राप्तस्येत्यर्थः । ससुट्कस्य स्थानित्वेन निर्देशसामर्थ्यान्निवर्त्तत इति भावः । न चोपसर्जनेऽ-

तित्वाकमित्यादौ कथमादेश इति वाच्यम् । साम इत्यत्र तंत्रेण केवलस्यामोऽपि निर्देशात् । एकशेषो वा । इत्थमुपपत्तिः । सामपदस्यामूपदेन एकशेषः असारूप्येऽपि विरूपाणामित्यस्य प्रवृत्तेः । एकत्र सुट्साहित्यार्थाधिक्येऽपि विशेष्यभूतस्यामोऽन्येनामासमानार्थत्वात् एवं चाकमः स्थानिवद्भावेनाम्त्वात्ससुट्कत्वाच्च साम इति प्रवर्तते उपसर्जने तु प्रथमप्रवृत्त्यैव पर्यवसानम् अत्राकमः स्थानिवद्भावेन नुट् तु न । अंगवृत्तपरिभाषया ह्रस्वनद्याप इत्यत्र ह्रस्वान्ताद्विहितस्यामो नुडिति व्याख्यानेन वेति । अन्ये तु सामः प्रसंगे आकम् इति सूत्रार्थः । तेनामुसकारयोरत्र विषयेऽत्यन्तमप्रयोगो बोध्यते । यथाऽस्धातुविषयेऽस्तेरप्रयोगो भुवश्च प्रयोगोऽस्तेर्भूरित्यनेन प्रतिपाद्यते न तु सतो निवृत्तिः शब्दानित्यताहानेः किन्तु प्रसक्तबुद्धेरेव निवृत्तिः । तत्र सकारबुद्धेः प्रकृते सांप्रातिक्या असम्भवाद्भाविन्या ग्रहणम् । सकारोच्चारणसामर्थ्यात् तन्निवृत्तिश्चामोऽभावात् । अत्र सामः स्थानित्वोक्त्याकमि स्थानिवद्भावेन सामृत्वमेव न त्वाम्त्वम् आम्येव साम्त्वस्याहार्यारोपेणादेशः आदेशस्याम्त्वाभावाच्चोपसर्जनेन नुट् । न च यत्र भावी सुट् तत्रैव आदेशो न तूपसर्जने । सामोभावित्वस्य सर्वथा दुरुपपादत्वादित्याहुः । ननु ह्रस्वादिरेवाकमस्तु मैवम् अन्त्यलोपपक्षेऽप्यकारस्यैत्वनिवृत्त्याचारितार्थ्येन युष्माकमित्यादौ पररूपापत्तेः न नुपष्ठ्यादिविशिष्टयोरित्यर्थलाभः कथम् । न च पदस्येत्याधिकाराद्विभक्त्यन्तस्यैव पदत्वादिति वाच्यम् । उक्तरीत्या वसनसादौ दोषाभावेऽपि भ्यामादौ विभ-

त्त्यविशिष्टस्यापि पदत्वसत्वात् । एवं चोक्तार्थसंपादनायास्तु स्थग्रहणमिति चेन्न । सर्वस्येत्यधिकारात्सामर्थ्यात्सर्वस्य विभक्तिविशिष्टस्य पदस्येत्यर्थसंभवात् । अत एव षष्ठीचतुर्थीद्वितीयानामिति सूत्रितेऽपि विशेषणेन तदन्तलाभात्षष्ठ्याद्यन्तयोर्युष्मदस्मदोरित्यर्थलाभो नतु युष्मदादिसंबन्धिनीनां षष्ठ्यादीनामित्यर्थ इति किं स्थग्रहणेनेत्यत आह स्थग्रहणादिति । अहान्यर्थेऽत्र तिष्ठतिः यथा समये तिष्ठ सुग्रीवेत्यत्र समयं मा हासीरित्यर्थो गम्यते धातूनामनेकार्थत्वादत्र तल्लाभ इति भावः । तेन षष्ठ्यादीनविजहतोर्युष्मदस्मदोरेवादेशा इत्याह श्रूयमाणेति। इति युष्मत्पुत्र इति । पदात्परत्वं संपादयितुमिति शब्दः प्रयुक्तः युवयोर्युष्माकं वा पुत्र इत्यर्थः । न तु तव पुत्रः इत्येवं सति त्वमादेशप्रसङ्गः । यद्यपि वृत्तौ संख्याविशेषो नावगम्यते वृत्तेः स्वभावादिति स्पष्टं भाष्ये तथाप्यवच्छेदकत्वेनैवानेकव्यक्त्यवगमो न द्वित्वादेर्मानं नाप्येकत्वस्येति वस्तुगतिः । प्रकृते तु संबोध्यत्वरूपावच्छेदकेनैवानेकव्यक्त्यवगतिरिति शास्त्रप्रवृत्त्युपयोगिवचनारोपेऽपि श्रूयमाणत्वाभावान्नादेशाः । केचित्तु वृत्तावेकत्वसंख्या प्रतीयते द्वित्वादिकं यत्नलभ्यमत एव संयोगस्येति सूत्रितेऽपि विशेषणेनान्तलाभे संयोगावन्ते यस्येति द्विवचनान्तेन समासलाभार्थमन्तग्रहणं तेन प्रत्येकं संयोगसञ्ज्ञापक्षे सुदृषत्करोतीत्यादौ न लोप इति तन्न सत अननुभवात् । किञ्चार्द्धं नपुंसकमित्यत्रार्द्धं पिप्पलीनामित्यर्थे समासमाशक्यैकाधिकरणेनेत्यस्यानुवृत्त्या समाहितं द्वितीये भाष्ये पूर्वमते तूपसर्जनपदार्थे एकत्वस्यैव भानात् समासप्रसङ्ग एव

नास्ति मम तु पिप्पलीत्वेनानेकव्यक्तिबोधादाशंकोचितैवेत्याधिकं नागेशीये । निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थकं समानवाक्यमिति स्वसंकेतं विषयीकरोति । एकतिङिति । तिङ्पदेन तिङन्तं गृह्यते बहुव्रीहिरत्रैकतिङन्तघटितामित्यर्थः तेन । पचतीत्येतन्मात्रस्य न वाक्यत्वम् । ननु पश्य मृगो धावतीत्यादौ वाक्यप्रतिपादकपरभाष्यविरोधः किञ्चास्तु एकतिङ्विशेष्यकं वाक्यमत एव व्रजानि देवदत्तेत्यादौ सम्बोधनस्य क्रियान्वयनियमेन जानीहीत्यध्याहारेणैकवाक्यत्वप्रयुक्तानिघातस्वरः एवमपि समानवाक्ये तिङ्द्वयलाभेन निघातव्यावृत्तये तिङ्ङतिङ इति सूत्रेऽतिङ्ग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानपरभाष्यविरोध इति चेन्न । पश्य मृगेत्यादौ लौकिकं वाक्यं वार्त्तिकविषये तु स्वशास्त्रकार्य्योपयोगिनिरुक्तमेकवाक्यमित्यदोषात् । एवमपि व्रजानि देवदत्तेत्यादौ कथम् श्रूयमाणैकतिङन्तघटितामिति वक्तुलार्थेनोपपत्तेरिति दिक् । लौकिकं त्वमरेणोक्तं सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्वितेति । अयमर्थः । वाकारश्चेदर्थे कारकान्वितक्रिया चेद्वोध्येति शेषस्तेन निरर्थकशब्दसमुदायव्यावृत्तिः । सुप् च तिङन्तं च सुप्तिङन्ते सुब्विशिष्टं तिङन्तं तेषामेकशेषः । तेन कारकान्वितक्रियाबोधकः सुबन्तचयस्तिङन्तचयः सुप्तिङन्तचयश्चेति त्रिधा । चैत्रेण शयितव्यम् पचति भवति चैत्रः पचतीत्यादिक्रमेण बोध्यः । तुल्यार्थैरित्यादिवत्तृतीयानिर्देशेनैव सिद्धे युक्तग्रहणं व्यर्थमत आह युक्तेति । नपुंसके भावे क्तः । अयं भावः । चादिपञ्चकानां क्रणमे समुच्चयो विकल्पोऽद्भुतः खेदोऽवधारणं चेति पञ्चार्थाः । ते

च चादिसमभिहारे विशेष्यशब्देन वाच्याश्चादिभिर्द्योत्यन्ते चादीनां द्योतकत्वादित्यन्यत्र विस्तरः शब्दशक्तिस्वभावान्नित्यानुभवसिद्ध-त्वाच्च नित्यपरतंत्रानियताः स्वार्थं परविशेषणत्वेनैव बोधयन्तीति, एवञ्च यत्र युष्मदस्मदर्थगतसमुच्चयादीन् द्योतयन्ति चादयस्तदा चादिभिः सहार्थद्वारा युष्मदस्मदोः साक्षाद्योगस्तत्रायं निषेधक इति त्वां मां चेत्यादावादेशाभाव उदाहृतः । परंपरेति । स्वार्था-श्रयान्वय्यन्वयित्वादिरूपे इत्यर्थः । हरो हरिश्च मे इति । इह हरिहरगतसमुच्चयं च शब्दो द्योतयति हरिहराभ्यां त्वस्मदः स्वस्वाम्यादिसम्बन्ध इति भवत्येवादेशः । एवञ्च युक्तग्रहणेन ज्ञाप्य-तेऽन्यत्र परंपरासम्बधेऽपि निषेध इत्याशयेन समनन्तरं वक्ष्यति परंपरेति । तस्य स्वान्वितान्वयित्वादिरूपे इत्यर्थो न तूक्त-तस्य द्योतकविषयत्वात् तत्र तस्मिन्धातौ कर्मतयान्वितं रूपं तत्र युष्मद्शब्दार्थान्वय इत्यस्ति परंपरासम्बन्धः । भाष्ये तूक्तं पश्यार्थैश्च प्रतिषेधः सामान्यवाक्य इति प्रकृत्यवक्तव्यः इव-रथाहि, यत्रैव पश्यार्थानां युष्मदस्मदोसाधनं तत्रैव प्रतिषेधो ग्रामस्त्वा संप्रेक्ष्य गत इति इह न स्याद् ग्रामस्तव स्वं संप्रेक्ष्य गत इति । समानवाक्य इति करणेन समानवाक्ये पश्यार्थैर्युक्तयुक्ते च युष्मदाद्यर्थैः आदेशप्रतिषेध इत्यर्थं कैयटो व्याचष्टे । एवञ्च भाष्यकैयटाभ्यां पश्यार्थैरित्यस्य युक्तग्रहणाभावे साक्षाद्योग एव प्रवृत्तिः समानवाक्य इतीह सम्बन्धाद्युक्तयुक्तेऽपि प्रवृत्तिरिति लभ्यते तस्य स्पष्टार्थत्वमेवेति । ननु भाव्यमानः सवर्णान्न गृह्णा-तीति कथं ह्रस्वेन दीर्घसंग्रहोऽत आह उ इतीति । ह्रस्वव्यञ्जनयो-

रीति । व्यञ्जनस्य हि ह्रस्व ईषत्सदृश इति भावः । अत्राहुः । उस् ऊस् इति द्वन्द्वे सुलोपे ह्यन्तत्वाद्ध्रस्वस्य पूर्वनिपाते नपुंसकह्रस्वसवर्णदीर्घयोः प्राप्तयोर्दीर्घस्य शब्दान्तरप्राप्त्यानित्यत्वेन नित्यत्वादपरनिमित्तत्वेनान्तरङ्गत्वाच्च ह्रस्वत्वे ततः सवर्णदीर्घे उ इति रूपासिद्धेर्मूलोक्तं न युक्तम् । तस्मादिव उत् ऋत इदिति च तपरकरणेन भाव्यमानोऽप्युकारः सवर्णान् गृह्णातीति परिभाषाया ज्ञापनेनात्र सिद्धिरिति वस्तुगत्या शब्दान्तरस्य प्राप्नुवन्विधिरनित्योऽन्तरङ्गं बलीय इति परिभाषयोः सौत्ररूपसामर्थ्येनानित्यत्वात् पूर्व दीर्घ एव ततो ह्रस्वः किं च समुदायस्यैव नपुंसकवृत्तित्वेन समुदायाश्रयणरूपबहिरङ्गत्वस्य ह्रस्वविधेरप्यावश्यकत्वम् । अपिच आकृतेरेकतया शब्दान्तरेत्यस्य प्राप्त्यभावः । ऊकाल इत्यत्र स्पष्टार्थमेव समाहारो न निर्दिष्टः इति न मूलासङ्गतिः । अस्तु चोक्तरीत्या पूर्व ह्रस्वस्ततो दीर्घ एवमपि पुनर्ह्रस्वप्रवृत्तेः । न च लक्ष्ये लक्षणस्येति न्यायविरोधः कार्यभेदेन लक्ष्यभेदस्य बहुत्राभ्युपगमात् । किं च तत्रैव लक्ष्ये लक्षणन्यायः प्रवर्त्तते यत्र रूपासङ्गतिर्भविष्यतीति इह तु पुनर्लक्षणप्रवृत्त्यैव रूपासिद्धिरिति वदन्ति । नन्वदस्यतीत्यत्रासेरितीकारस्योच्चारणार्थतयाऽसान्तस्यादस इत्यर्थे दोषाभावेऽप्यदोऽत्राद इत्यादावुत्वाद्यापत्तिरिति चेन्नैवम् । सग्रहणस्य सस्थानिकौकाररेफयोरप्युपलक्षणत्वादित्याकरे स्फुटम् । तथा चादसोऽवयवदकाराभ्यां परयोरकाररेफयोरुत्वमत्वे चामुमुयङित्यादि सिद्धम् । ननु सूत्रेऽदस इति विनिगमनाविरहात्स्थानषष्ठी तन्निबन्धनालोन्त्यपरिभाषोपस्थितिश्च तथा चादसो योऽन्त्य इकारः स

दात्परो नं भवति रेफव्यवधानाच्च दात्परो रेफः सोऽदसोऽन्त्यो नेति कथमत्र शास्त्रप्राप्तिरित्याशंक्य भाष्योक्तपरिभाषामर्थतो विन्यस्यति अन्त्यबाध इति । अन्त्यस्य बाधे कार्यप्राप्तावन्त्येन समानो देशो यस्य तस्य भवतीति तदर्थः अन्त्यसदेशत्वं चान्त्या-व्यवहितपूर्ववर्त्तित्वं तादृशं च रेफस्यैवेति तस्योत्वम् । ष्यङः संप्रसारणमित्यत्र षष्ठे भाष्येऽनन्त्यविकारेऽन्त्यसदेशस्येति पठितम-न्त्यदेशान्त्यदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्येति तदर्थोऽ-नन्त्यविकार इति लिङ्गमित्यधिकं नागेशीये । व्याख्यानान्तरमाह अः सेरिति । एवं विग्रहे एकदेशिसमासः । फलितमाह त्यदाद्य-त्वेति । त्यदादीनाम इत्यत्र कृताकारान्तस्यादस इति पठनार्थः । इह तु टेरद्व्यादेश इति भावः । इदमुपलक्षणमासर्वनाम्न इत्यस्या-त्वस्यापि तेनामूदृगित्यादि सिद्धम् । उक्तपक्षत्रये वार्तिकं प्रमाण-यति उक्तं चेति । लत्ववदिति । चलीक्लृप्यत इत्यत्र रीगृकारयोः कृपो रो ल इति यथा लत्वं तथेहापीति प्रथमे दृष्टान्तः सूत्रे अप्र-त्यये इति पाठेऽविद्यमानः प्रत्ययोऽप्रत्ययः क्विबादिः वप्रत्यये इति पाठेऽपि अकारस्याविवक्षितत्वात्स एवार्थः । स च किमर्थ इति पृच्छति वप्रत्यये किमिति । तदभावे मास्तु इत्युत्तरयति विष्वगञ्च-नमिति । अत्र ल्युट अनादेशः । ननु तदभावेऽप्यलुगुत्तरपदे इत्यधिकारादेतत्सूत्रस्याञ्चुरूपे उत्तरपदे इत्यर्थस्यावश्यभावाद्विष्व-गंचनमिति ल्युडन्तस्य व्यावृत्तिसिद्धौ व्यर्थं तद्ग्रहणमत आह वप्रत्यये इति । अश्वताविति । समभिहारात्सजातीयज्ञापनं तत् फलं चाहान्यत्रेत्यादि । अतः कृत्रमीत्यादौ स धातुरादिर्यस्येति

तदादिस्तेनाणाद्यन्तेऽपि भवतीत्याह तेनेति । अन्यथा तत्र नित्य-समास इत्यस्मादनुवृत्तसमासीनोत्तरपदाक्षेपेऽपि कृधातुरूपे उत्तरपदे इत्यर्थापत्तावयस्कादित्यत्रैव स्यादिति भावः । पूर्व्वस्मात् परं बलवत् विप्रतिषेधशास्त्रात् तस्मान्नित्यं कृताकृतप्रसंगित्वमात्रम् । ताभ्या-मन्तरंगमसिद्धत्वात् तेभ्यश्चापवादो वचनप्रामाण्यादिति परनित्येति परिभाषायां बीजं तद् ध्वनयन्नाह परमिति । न च दीर्घस्याचरि-तार्थत्वात् कथं विप्रतिषेधत्वं वचनसामर्थ्यात् पूर्वमुपधा पदासंबन्धेन चारितार्थ्यात्तस्येत्यभिमानः । अयमभ्युच्चय इत्याह नित्यमिति । सामर्थ्यादिति । वाक्यार्थबोधकाले विरोधाभावेनोपधासंबन्धे कृते सामर्थ्यात् पूर्वं दीर्घप्रवृत्तिरेव कल्प्यत इति भावः । ननु एकानुबन्ध-कग्रहणेन द्व्यनुबन्धकग्रहणमिति चतुर्थे भाष्ये स्पष्टया परिभाषया मतुपोऽग्रहणेन धीमानित्यादौ कथं दीर्घः । न च सूत्रसामर्थ्यादिति वाच्यम् । अनुनासिकोकारविशिष्टे भवतु शब्दे चरितार्थत्वादिति चेन्न । पकारस्य समुदायानुबन्धत्वेऽप्यनुमात्रस्य द्व्यनुबन्धत्वा-

न चाश्वतेश्चेन्नलोऽपि न एव तेन पूजार्थस्य नेति नियमसंपादनेन तद्ग्रहणं चरितार्थं कथमुक्तार्थं ज्ञापयतीति, किञ्च नुम्मात्रविषयको नियमोऽस्तु इति वाच्यम् । अचामिति नलोपस्याविवक्षितत्वात् । नियमफलमाह तेनेति अत्र नुम्न क्विबन्तस्य धातुत्वात् उखास्रत् ब्राह्मणीत्यत्र नुम् उगितश्चेति ङीप् च नेत्यर्थः । ननु गोमानित्यस्य धातुत्वात् कथं नुम्स्यात् अत आह अधातोरितीति न चौपदेशिकधातुविषयक एव नियम उक्तो भवतु किमनेनेति वाच्यम् । उगिदचामित्यत्र सप्तमे गोमत्यतेरप्रत्यये गोमानिति भाष्येणोक्तरूपस्यैव सामान्यापेक्षत्वादिति दिक् । अधात्विति । पूर्वं भूतो भूतपूर्वः न धातुर्भूतपूर्वोऽधातुभूतपूर्वस्तस्येत्यर्थः । तेन साम्प्रतिकाभावे भूतपूर्वगतिरिति । परिभाषा सिद्धा कुत्वस्यासिद्धत्वाद् व्रश्चेति ष इति । अयं भावः व्रश्चेति निशादौ चरितार्थं क्विन्प्रत्ययस्येत्यपि ऋत्विगाद्यंशे चरितार्थं तादृश इति स्थिते परत्वात्क्विन्प्रत्येति कुत्वशास्त्रे प्राप्ते पूर्वत्रासिद्धमिति षत्वविधिं प्रति कुत्वविधेरसिद्धत्वात् निष्प्रतिपक्षत्वेन षत्वमेवेति । ननु क्विबन्ते कथं क्विन्प्रत्ययस्येत्यस्य प्राप्तिः इत्थम् । प्रत्ययग्रहणेन बहुव्रीह्यर्थाश्रयणात् । तदुक्तं क्विन्प्रत्ययस्येत्यत्राष्टमे भाष्ये । क्विन्कुरिति सिद्ध्येत् प्रत्ययग्रहणं कृतं तेन येभ्यः प्रत्ययो विधीयते तेषामन्यप्रत्ययान्तानामपि कुत्वं यथा स्यादिति अत्र कैयटः व्रश्चेति षत्वे प्राप्ते कुत्वं शस्य खः ववसान इति चर्त्वेन कः पूर्वत्रासिद्धमित्यसिद्धत्वं षत्वे कुत्वस्य नास्ति प्रत्ययग्रहणसामर्थ्यात् षत्वापवादत्वात्कुत्वस्येत्याचष्टे तदाह षत्वेत्यादि । तस्यायमभिप्रायः क्विन्क्रुयत इति न्यासेन दृष्ट

इत्यध्याहारेण च बहुव्रीह्यर्थलाभे सिद्धे प्रत्ययग्रहणमन्यपदार्थे वीप्सागर्भबहुव्रीह्यर्थलाभार्थं तेन विशिष्य' तादृक्छन्दादिविषयकलक्षणोपप्लवेन तादृक्छन्दविषये षत्वस्यापवादकं कुत्वं निरवकाशत्वादिति अयमेवाशयो हरदत्तमिश्रादीनामपि बोध्यः। इदं च मतं भाष्यविरुद्धं प्रत्ययग्रहणस्य बहुव्रीह्यर्थमात्रफलकताया एव तत्रोक्तत्वात् तस्माद्दृत्विगाद्यंशे चरितार्थस्य कुत्वविधेर्नापवादत्वमिति स्थितम् इण्को इत्यधिकारस्य पंचम्यर्थषष्ठीत्वादनानन्तर्ये षत्वाप्राप्तौ नुम् विसर्जनीयेति व्यवायेऽपि षत्वार्थं तत्र यथा वृषलैर्न प्रवेष्टव्यमिति वृषलप्रवेशनिषेधपरेण वाक्येन प्रत्येकं समुदायस्य च प्रवेशाभावो बोध्यते तथा नुमादीनां षत्वप्रतिबंधहेतुत्वप्रतिपादनायोपादानात्प्रत्येकं समुदायेन च व्यवाये षत्वप्राप्त्या निस्स्वेत्याद्यर्थं निंसेः प्रतिषेधो वक्तव्य इति वार्तिकं तत्प्रत्याख्याय भाष्यकृतोक्तं योगविभागात्सिद्धं तद्यथा नुम्व्यवाये विसर्जनीयव्यवाये शर्व्यवाये इति स तर्हि योगविभागः कर्तव्यो न कर्तव्यः प्रत्येकं व्यवायशब्दः परिसमाप्यत इति तदेवाह प्रत्येकमिति। निंस्स्वेति। णिसि-चुंबने इदितो नुम् तस्यानुस्वारः। नन्वाद्यसकारस्य प्रत्येकं व्यवायादस्तु षत्वमिति चेन्न आदेशप्रत्ययत्वाभावात्। न चास्मात्परत्रादेशप्रत्यययोरित्यस्य स्थितेः कथमत्र तदनुवृत्तिरिति वाच्यम्। अपदान्तस्य मूर्द्धन्य इण्कोरितिवदस्याप्यधिकारसूत्रत्वेन स्वातंत्र्येण विधायकत्वाभावात् नन्वयोगवाहानां शर्षूपदेश इति हयवरट्सूत्रे भाष्योक्तेः शरन्तर्गतत्वेन यथा विसर्जनीयग्रहणं व्यर्थं तथा नुम्-

ग्रहणं मास्त्वित्यत आह उपलक्षणार्थमिति । व्याख्यानादिति । भाष्यकृतादित्यर्थः । तत्रैवोक्तं भाष्ये नुम्ग्रहणं नुमो योऽनुस्वारस्तत्र यथा स्यादिह मा भूत्पुंस्विति तदेतदाह अत एवेति । ननु पिपठीष्षु इत्यादौ सनः सस्य रुत्वविसर्गयोः कृतयोर्वा शरीति वैकल्पिकशकारे शराव्यवाये सुपः सस्य षत्वेऽपदान्तस्येत्यनेनादेशप्रत्यययोरित्यस्य बाधनाद्विसर्गस्थानिकस्य सस्य ष्टुत्वेनैव सिद्धे सग्रहणमेवास्तु किं शग्रहणेनेति चेत् भवेदेवं यदि भाष्यकृत् शर्ग्रहणमाश्रित्य विसर्जनीयग्रहणं न प्रत्याचक्षीत न चानुमा नुम्स्थानिकानुस्वारमुपलक्षयेत् । ननु यचि भमिति प्रातिपदिकस्य भसंज्ञाविधानाद्धातोस्तदभावे न टेरिति कथं प्रवर्तते इत्यत आह सामर्थ्यादिति । सति गमके टेरिति भं विनापि प्रवर्तत इति भावः । ननु अपवादत्वात्स्कोरित प्रवृत्ते रूपासिद्धिरत आह षत्वस्येति । आदेशप्रत्यययोरिति कृतस्येत्यर्थः । अश्चेति ष इति । सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यताया त्रिपादिस्थस्याप्रवृत्तेर्हल्ङ्यादिलोपोत्तरं विविशस् इत्यवस्थाया षत्वासिद्ध्या संयोगान्तलोपे षो भवतीति घटनार्थः । तक्ष्णोतेः क्विपि पदान्तसंयोगादिलोपस्य संयोगान्तलोपापवादकत्वात्कलोपे ताडिति सिद्धं ण्यन्ते तु नेत्याह तक्षीति । णिलोपस्य णेरनिटीति कृतस्य स्थानिवद्भावात् अचः परस्मिन्निति जातात् । न च क्वौ लुप्तमिति निषेधः तस्यासार्वत्रिकत्वात् अपवादस्याप्रवृत्ता उत्सर्गविधिप्रवृत्तेराह तस्मादिति न च बहिर्भूतक्विबपेक्षत्वेन णिलोपस्य बहिरंगत्वात्संयोगान्तलोपे कर्त्तव्येऽसिद्धत्वं, शंक्यम् । परिभाषाया

अनित्यत्वात् पदसंज्ञासापेक्षत्वेन संयोगान्तलोपस्यैव बहिरङ्ग-त्वादित्यप्यन्ये । ननु संयोगान्तलोपं बाधित्वा स्कोरिति स्यादत आह कुत्वस्येति चोः कुरिति विहितस्येत्यर्थः । पिपस् इत्यव-स्थायां कुत्वासिद्ध्या ककाराभावेन स्कोरित्यस्याप्राप्तेः संयोगान्त-लोप इत्याशयः पद्लृ इत्यस्माद्भाषायां सदवस् श्रुव इति लिटः क्वसुः द्वित्वं हलादिशेषः अत एक हलित्येत्वाभ्यासलोपौ वस्वे-काजाद्घसामितीटशसादौ वसोरिति संप्रसारणमित्यनयोर्मध्ये ताव-त्प्रत्याह अन्तरङ्गमिति । अन्तरपेक्षत्वेनेति भावः अकृतेति । न च संप्रसारणं तदाश्रयं कार्य्यं च बलवादिति परिभाषया संप्रसारणे कृते इटोऽप्राप्तिरेवेति लिट्यभ्यासस्येत्यत्र भाष्ये उक्तपरिभाषायाः खण्डनात् तच्च तिङन्ते वक्ष्यते । अन्ये तु पदावधिकमन्वाख्यान इति पक्षे लक्ष्यानुरोधादाश्रीयमाणे सिद्धम् । सेदूवस् असि इति स्थिते इट्संप्रसारणयोः प्राप्तौ प्रातिपदाविधि-त्वेन शीघ्रोपस्थितिकत्वात्पूर्वं संप्रसारणे ततो वलादित्वाभावान्नेटः प्राप्तिरित्यकृतेति परिभाषा व्यर्थेति । न च विदेः शतुर्वसोरेका-नुबंधकत्वादेकानुबन्धकेति परिभाषया लिडादेशस्य क्वसोः संप्र-सारणं न स्यादिति वाच्यम् । वसुरादेशेन तस्यापि द्व्यनुबंधक-त्वादिति द्विसकारको निर्देश इत्यादिना तत्रैव सूत्रे षष्ठे स्पष्टं भाष्ये । ननु षत्वतुकोरिति सूत्रेण संप्रसारणाच्चेति पूर्वरूपत्वस्य षत्वे कर्त्तव्ये सिद्धत्वमिति चेन्न । पदान्तपदाद्योरेकादेशस्यैव तेनासिद्धत्वबोधनादिति स्पष्टं तृतीये ङेचखन इत्यत्रान्यत्र च भाष्ये । ननु प्रातिपदिकाधिकाराद्धातोर्भूतत्वेनाविशेषाद्धातोरप्यु-

पधाया दीर्घः स्यादत आह सान्तमहत इति साहचर्य्यादिति । महतः प्रातिपदिकत्वाव्यभिचारादिति भावः । ननु महान्तमिच्छतीत्यर्थे क्यच् ततः क्विपि महतोऽपि धातुत्वमस्तीति चेन्न । औपदेशिकधातुत्वस्याभावात्तत्साहचर्येणौपदेशिकधातुभिन्नासन्तसंयोगस्य ग्रहणमित्यभिप्रायात् । न च सुहिन्नित्यत्र सर्वनामेति दीर्घोऽस्तु संयोगान्तलोपस्यासिद्धत्वात् । प्रत्ययस्योगित्त्वेन सिद्धे उकारस्य वैयर्थ्यमाशंक्याह उच्चारणार्थ इति । प्रत्ययस्योगित्वं सफलयति बहुपुंसीति त्वं न चात्राप्यन्तर्वर्त्तिनीं विभक्तिमाश्रित्य तस्याः परतोऽसुङेवास्तु इति वाच्यम् । अनुवृत्तसर्वनामस्थाने इत्यत्र विवक्षितसप्तमीस्वीकारात् अत एव परमपुमानित्यत्रासुङि समासान्तोदात्तत्वं भवदसुङ एवाकारस्य भवति परसप्तम्या नैतत् सिध्येत् सर्वनामस्थाने प्रागेव पुम्शब्दोकारस्योदात्तत्वे कृते स्रंसनधर्मिणो हलः स्थाने तद्धर्मणोऽनुदात्तस्यैवादेशस्य प्रसंगात् । उक्तं च सप्तमे प्रकृतसूत्रे भाष्ये असुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वादिति । ननु बहुपुंस् इत्यवस्थाया सर्वनामस्थानविवक्षोत्तरं ङीबस्तु नैतत् । प्रातिपदिकत्वप्रयुक्तकार्याणा क्रमिकत्वस्वीकारस्योक्तत्वात् । न च ङीबन्तस्याप्यसुङ् स्याल्लिंगविशिष्टपरिभाषयेति वाच्यम् । विभक्तौ लिंगेति निषेधात् । अत्र वदन्ति विवक्षितसप्तम्यामपि विभक्तिबुद्धिनिमित्तकत्वेनासुङो बहिरङ्गत्वात्ततः पूर्वं परमपुमानित्यत्र समासान्तोदात्तप्रवृत्तेर्दोष एव । किंच परसप्तमीपक्षेऽपि सूपपादः अकृतव्यूहपरिभाषाया बहिरङ्गपरिभाषापवादकत्वादिति तन्न । बहिरङ्गपरिभाषायां

बुद्धिकृतंबाहिरङ्गत्वाश्रयणे वहूपप्लवापत्तेः अकृतेत्यस्या असत्त्वाच्च । वहुपुंसीत्यत्रासुङ्प्रवृतेश्चेति दिक् । पूञ् इति पातेरिति पाठान्तरम् । स्त्रियामित्यत्र चतुर्थे सूतेः सस्य पो ह्रस्वोऽम्सुन्प्रत्यय इति भाष्यकैयटयोरुक्तमुभयथापि न दोष इत्याह । प्रत्ययस्थेति । ननूच्चारणार्थानामपीत्संज्ञाया आवश्यकत्वादियमुक्तिर्निष्फलेति चेन्न । उच्चारणमात्रार्थतदतिरिक्तार्थयोरित्सञ्ज्ञयाऽपगमाविशेषेऽप्येकस्य कार्याप्रवर्त्तकत्वेन च विशेष्यस्यावश्यं वक्तव्यत्वादिति । स्यादेतत् अत्वसन्तस्येत्यत्र धातुभिन्नासन्तस्येत्यर्थात्सुवः पिण्डग्र इत्यादौ समुदायस्य धातुभिन्नत्वाद्दीर्घोऽत आह । अधातोरिति धात्ववयवभिन्नासन्तेति विवक्षितार्थकस्येत्यर्थः । ननु वार्तिकद्वयप्रतिपाद्यकार्यद्वयस्य पर्यायतापत्तिरत आह । प्रतिषेधेति सुधीवेत्यत्र ङीवादेशवत् सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपाय इति न्यायादिति भावः । अयं च बिल्वकादिभ्यच्छस्य लुगित्यत्र छग्रहणेन ज्ञाप्यते तद्यथा बिल्वकादेरुत्तरप्रत्ययस्य प्रनिमित्ते तद्धिते विधीयमानो लुक् प्रत्ययान्तराभावाच्छस्यैव सिद्धिरिति छमात्रस्य लुग्यथा स्यान्न तु छसन्नियोगशिष्टकुको निवृत्तिरित्यर्थाच्छग्रहणमिति, इदं च न क्त्वा सेडित्यत्र प्रथमे स्पष्टं कैयटे बिल्वकादिभ्य इत्यत्र षष्ठे भाष्ये च तदभावे औत्वप्रतिषेधाभावे, सादुत्वं चेत्यस्य तदोः सः साविति विहितसकारात्परस्योत्वमित्यर्थः । असुक इति, असुक इत्यादि त्वव्युत्पन्नोऽदःशब्दपर्यायः । ननु सोडौ इत्येवास्तु मेवम् । अनावित्यत्र टिलोपे कृते नित्यत्वात्सत्वं बाधित्वा त्यदाद्यत्वेऽसावित्यसिद्धेः । न च

टिलोपात्परत्वेन नित्यत्वेन च त्यदाद्यत्वस्यैव प्रवृत्तिः टिलोपस्य प्रतिपदविधित्वेन पूर्वकालप्रातिकत्वरूपान्तरंगत्वेन बलीयस्त्वात् । तव मते वृद्धैयेव सिद्धे ङित्त्ववैयर्थ्यात् सामर्थ्येनाङ्गभत्ववैकल्येऽपि प्रवृत्तिदर्शनेनास्य बलत्वाच्चेति ङुदः प्रथमस्येत्यत्र ध्वनितं भाष्ये स्पष्टमुद्योते । एतेन परत्वान्नित्यत्वाच्च टिलोपात्प्राक् त्यदाद्यत्वस्य प्रवृत्तेः सोडावित्येव युक्तमिति मन्दोक्तमपास्तम् । अन्यत्वादकृतव्यूहपरिभाषया सत्वानापत्तेश्च । ननु सुलोप इति न कार्यं सेरेवौकारोस्तु त्यदाद्यत्वेन रूपसिद्धिरिति चेन्न । असकौ स्त्रीत्यत्र प्रत्ययस्थादिति त्वप्रसङ्गात् । न च प्रत्ययस्थादित्यत्र आ आपीति प्रश्लिष्टनिर्देशादाकाररूपस्यैवापो ग्रहणेनात्र वृद्धौ कृतायामौकाररूपत्वान्नेत्वमिति वाच्यम् । कारिके इत्यादि द्विवचनादावप्यैकाररूपत्वादित्वानापत्तेरिति स्पष्टं भाष्येन चात्रेत्वमन्तरंगत्वात्सुबुत्पत्तेः प्रागेव प्रतिपद्येत असकावित्यत्र तु प्राक् सुबुत्पत्तेर्न नास्ति विभक्तिनिमित्तकत्यदाद्यत्वाप्रवृत्तेरनन्तत्वादिति वाच्यम् अत्रापि कृते टाप्येकादेशात्पूर्वं वार्णादांगं बलीय इतीत्वप्रसंगात् । ननु *प्रश्लेषनिर्देशवैयर्थ्यम् एवं तर्हि तत्सामर्थ्येन* वार्णपरिभाषां बाधित्वा एकादेश एव कारिकेत्यत्राप्यन्तरंगादप्यात्वात् पूर्वं विभक्तिस्तन्निमित्तकार्याप्रसंग इति बोध्यते वस्तुतः प्रश्लिष्टनिर्देशो व्यर्थः प्राप्तजीविक इत्यत्र दोषाच्चेति दिक् । त्यदादीनामित्यादिसपादसप्ताध्याय्यां प्रत्यदसो सेरिति त्रिपादिकशास्त्रस्यासिद्धत्वादकृते तु त्यदादीनाम इति विभक्तिकार्यं सातत्वादुत्वमत्वयोरप्रवृत्तिश्चेत्याशयेनाह । विभक्तिकार्यं प्रागिति ।

पूर्वत्र सिद्धं निष्पन्नं प्रवृत्तं तद्भिन्नमप्रसिद्धमप्रवृत्तमेवं चादसो सेरिति शास्त्रस्यैवाप्रवृत्तत्वात्प्रथममेव विभक्तिकार्यं यदि तु कार्यासिद्धत्वमिष्येत तर्हि अमू इत्यादि न सिद्ध्येत् त्यदाद्यत्वे कृते पररूपात् प्रागेवोत्वमत्वयोर्जातयोः पश्चात् कार्ययोरसिद्धतयाऽतो गुण इति पररूपेऽमावित्याद्यनिष्टापत्तेरित्यन्यत्र विस्तरः ॥

इति हलन्ताः पुँल्लिङ्गाः स्त्रीलिंगाश्च ।

---

दध्नः सेचाविति षष्ठीसमासः इहादेशप्रत्यययोरिति प्राप्तं षत्वं प्रत्ययलक्षणेन विभक्त्या पदत्वमाश्रित्य सादित्यस्य पदादेश्च यस्य षो नेत्यर्थकेन सात्पदाद्योरिति सूत्रेण पदादित्वे षत्वनिषेधः सिध्यति पदादिविधिश्च प्रतिपदोक्तत्वात् सात्पदाद्योरित्येव तेन परमवुधावित्यादौ भष्भावो न अयं च निषेध उत्तरपदस्य कार्यित्व एवेति उगि च पदे इत्यत्रोक्तम् । ननु समासस्य चरमावयव इत्युक्तेः पूर्वदण्डिप्रिय इत्यादाववान्तरतत्पुरुषे पदत्वं तत्प्रयुक्तनलोपो न स्यादिति चेन्न उत्तरपदशब्देन मध्यमपदत्वानाक्रान्तोत्तरपदस्य ग्रहणात् । ननु वहुचूपूर्वके वहुसेचावित्यत्र षत्वं स्यादेव वहुचोऽपदत्वेन षत्वप्रतिषेधाप्राप्तेरिति चेन्मैवम् । वहुच्पूर्वस्य नेति वचनान्तरादित्यन्यत्र विस्तरः । वस्तुगत्या यचि भमित्यस्य योगविभागेन यजादौ सुपि पूर्वं पदं नेत्यर्थो भाष्ये स्थितः स चोक्तः प्राक् एवं च परमवाचावित्यत्र प्रत्ययलक्षणेनापि पदत्वं न सम्भवति अत एव परमदण्डिन्नागच्छेत्यत्रोत्तरपदत्वाश्रयो ङमुट् सिध्यति दधिसेचावित्यत्र तु अवश्यमाश्रयणीयेन पदादादेः पदादिरिति पञ्चमीसमासेनैव निर्वाहः । एवं चोत्तरपदत्वेनेति निषेधो व्यर्थ एवेति । नन्वहः अहोभ्यामित्यादौ रोः सुप्यहन्नित्यनयोरचारितार्थ्येनापवादरूपत्वान्नलोपसूत्रस्य वाध एवेत्याशंक्य नलोपसूत्रस्यासिद्धत्वेन तयोश्चारितार्थ्यादसम्भवे सति अपवादत्वं स्यादित्याशयेनाह । सिद्धत्वान्नलोपे प्राप्त इति । ननु नलोपेऽकारस्य रोरेवाविशेषाभावेनान्यतरेणैव सिद्धावुभयविधानसामर्थ्यादेव लोपो न भविष्यति चेन्न । नङिसम्बुद्ध्योरिति संबुद्धौ

प्रतिषेधेनाहर्गच्छेत्यादावुत्वाभावेन दीर्घाहो निदाघेत्यादावुत्वसंपादनेन च कृतार्थत्वात् । न च नकारोच्चारणसामर्थ्यबललब्धनकारान्तानुकरणेन नान्तस्याहन्शब्दस्येति व्याख्यानान्नलोपो नेति वाच्यम् । दीर्घाहो निदाघेत्यादौ संबुद्धौ भवृत्त्याभ्यामादौ व्यावृत्त्या च नकारस्य चारितार्थ्यान्नलोपबाधे मानाभावात् । आवर्त्येति । आवृत्तौ मानं च रूपरात्रीति वार्त्तिकम् । अन्यथा नलोपेऽकारस्य रेफादेशेनैव सिद्धे तद्व्यर्थमेव स्यात् । आवृत्तस्यायमर्थः पदान्ते अहन्निति निपात्यते इति तेन नलोपो न । अत्राहुः सत्यपि सम्भवेन बाधनमिति तु वार्तिकमतम् । मिदचोंत्यादित्यत्र भाष्ये सत्यपि संभवे बाधनं भवतीत्युक्तेरयमेव भाष्यसिद्धान्तः । अन्यथा सर्वेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात् । तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यत्वसंभवादित्यन्यत्र विस्तरः । एवं चात्रापि रुत्वरत्वे नलोपापवादभूते एवेति नलोपाप्राप्त्योक्तकुसृष्टिकल्पनं

तस्यासिद्धत्वादिति । रुत्वात्पूर्वं तु न दीर्घप्राप्तिः अकृतव्यूहा इति परिभाषया । तस्या असत्त्वे तु हल्ङ्यादिलोपात्पूर्वमेव परत्वाद्दीर्घ इति ज्ञेयम् । संबुद्धौ त्विति । संबुद्धिलोपेऽसंबुद्धावित्युक्ते दीर्घाभावे रुत्वे हशि चेत्युत्वे आद्गुणः । वक्ष्यमाणभाष्यप्रयोगेणानव्ययपूर्वपदे कुत्वाभावो बोध्यत इत्याभिप्रेत्याह असृज इति । विश्वसृडिति च क्विन्प्रत्ययस्येत्यस्यासिद्धत्वाद्व्रश्चेति षत्वे कुत्वं तु सृष्टमित्यादौ सावकाशमित्याशयः । नन्वसृगिति शोणितार्थक इति सृजधातो रूपत्वेऽर्थासंगतिः । किञ्च षत्वस्यैव प्रवृत्तिरनवकाशत्वादत आह यद्वेति । कुत्वापवाद इति सृजियज्योः पूर्वोत्तरसाहचर्येण पदान्ते विशिष्य षत्वबोधनेन तद्बलात् कुत्वबाध इति । अत एव तृतीये काम्यचेति सूत्रे भाष्योक्त उपयट्काम्यतीति प्रयोगो यजधातोः संगच्छते । ननु सृग्ऋत्विजोः कथमित्यत आह निपातनादेवेति । निपातनं नामान्यादृशप्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम् अपवादाप्रवृत्तिमात्रं निपातनेन बोध्यते कुत्वं तु सूत्रेणैवेति ध्येयम् । सृजधातो रूपं निवारयति असृगिति । एवं च नार्थासंगतिः । अस्यति उत्क्षिप्ता भवति क्षरतीति यावत् । अल्लोपस्येति । अतो लोपकृतस्येत्यर्थः । स्थानिवत्त्वात् अचः परस्मिन्निति कृतात् नुम् । नपुंसकस्य झलचः इति विहितः । स्वविधौ स्थानिवत्त्वाभावादिति । यस्यैव कार्यं तस्य स्थानिवत्त्वासम्भवादित्यर्थः । अयं भावः अनादिष्टादचः पूर्वस्य स्थानिवद्भावो भवति न चेदाजन्तमनादिष्टादचः पूर्वं येनाजन्तस्य नुमि कर्त्तव्येऽल्लोपः स्थानिवन्स्यादिति । एवं वक्ष्यमाणे पिपठिषि इत्यत्रापि नुमभाव उपपा-

दनीयः ननु कथं स्थानिवत्त्वम् आर्द्धधातुक इत्यस्य विषयसप्तमी-
त्वात् । अत एवाचो यदित्यत्र तृतीये भाष्ये हलन्तात् ण्यतासिद्धे-
ऽजग्रहणमजन्तभूतपूर्वादपि यथा स्यात् दित्स्याधित्स्यमित्युक्तम् ।
परसप्तमीत्वे तु ग्राग्यतो लोपाभावाद्भाष्यासंगतिः स्पष्टैवेति चेत्,
सत्यम् । परसप्तमीपक्षस्यापि सत्त्वात् अत एव धिनुत इत्यादौ
धिन्विकृण्व्योरचेति वकारस्याकारे उप्रत्यये चाकारस्य लोपे तस्य
स्थानिवद्भावाल्लघूपधगुणाभावः । इदं चासिद्धवत्सूत्रे पाष्ठे कैयटे
स्पष्टम् । न च झलन्तलक्षणे नुम् दुर्वारः कौलुतमिति स्थानिव-
त्त्वनिषेधादिति वाच्यम् । तस्यासार्वत्रिकत्वात् । अत एव ख्यत्या-
त्परस्य मपर्यन्तस्येति सूत्रयोरेव तदाश्रितं भाष्ये इति दीधीवेवी-
टामित्यत्र स्पष्टं कैयटादौ । नित्यादिति । कृताकृतप्रसंगित्वेनेति
भावः । परादिति । विप्रतिषेधेनेति भावः । आप इत्यत्र दीर्घविधिः
सावकाशः नुम् तु यशांसीत्यादौ । प्रतिपदोक्तत्वादिति । प्रति-
पदोक्तो विधिर्बलीयानिति वचनादिति भावः । निरवकाशमिति ।
तस्य निरवकाशत्वे सत्येव बाधकप्रयोजकत्वादिति भावः । तदुक्तं
शेषाद्विभाषेत्यत्र पञ्चमे भाष्ये शेषग्रहणमनर्थकं ये प्रतिपदं
विधीयन्ते ते बाधका भविष्यन्तीत्याशंक्यानवकाशा हि विधयो
बाधका भवन्ति समासान्ताश्च कवभावे सावकाशा इति । अन्ये तु
क्वचिदनवकाशत्वाभावेऽपि परनित्यादि समवधाने शीघ्रोपस्थिति-
कत्वेन पूर्वप्रयोजकं बलवत्त्वं प्रतिपदविधित्वेनापि अत एव हे रमे
इत्यादौ प्रतिपदोक्तत्वात्पूर्वमेत्वे आकारप्रश्लेषाद्धलड्याादिलोपो न

तस्यासिद्धत्वादिति । रुत्वात्पूर्वं तु न दीर्घप्राप्तिः अकृतव्यूहा इति परिभाषया । तस्या असत्त्वे तु हल्ङ्याब्भ्यादिलोपात्पूर्वमेव परत्वाद्दीर्घ इति ज्ञेयम् । संबुद्धौ त्विति । संबुद्धिलोपेऽसंबुद्धावित्युक्ते दीर्घाभावे रुत्वे हशि चेत्युत्वे आद्गुणः । वक्ष्यमाणभाष्यप्रयोगेणानव्ययपूर्वपदे कुत्वाभावो बोध्यत इत्याभिप्रेत्याह असृज इति । विश्वसृडिति च क्विन्प्रत्ययस्येत्यस्यासिद्धत्वाद्व्रश्चेति षत्वे कुत्वं तु सृष्टमित्यादौ सावकाशमित्याशयः । नन्वसृगिति शोणितार्थक इति सृजधातो रूपत्वेऽर्थासंगतिः । किञ्च षत्वस्यैव प्रवृत्तिरनवकाशत्वादत आह यद्वेति । कुत्वापवाद इति मृजियज्योः पूर्वोत्तरसाहचर्येण पदान्ते विशिष्य षत्वबोधनेन तद्बलात् कुत्वबाध इति । अत एव तृतीये काम्यचेति सूत्रे भाष्योक्त उपयट्काम्यतीति प्रयोगो यजधातोः संगच्छते । ननु सृग्ऋत्विजोः कथमित्यत आह निपातनादेवेति । निपातनं नामान्यादृशप्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम् अपवादाप्रवृत्तिमात्रं निपातनेन बोध्यते कुत्वं तु सूत्रेणैवेति ध्येयम् । सृजधातो रूपं निवारयति असृगिति । एवं च नार्थासंगतिः । अस्यति उत्क्षिप्ता भवति क्षरतीति यावत् । अल्लोपस्येति । अतो लोपकृतस्येत्यर्थः । स्थानिवत्त्वात् अचः परस्मिन्निति कृतात् नुम । नपुंसकस्य झलचः इति विहितः । स्वविधौ स्थानिवत्त्वाभावादिति । यस्यैव कार्य्यं तस्य स्थानिवत्त्वासम्भवादित्यर्थः । अयं भावः अनादिष्टादचः पूर्वस्य स्थानिवद्भावो भवति न चेहाजन्तमनादिष्टादचः पूर्वं येनाजन्तस्य नुमि कर्त्तव्येऽल्लोपः स्थानिवत्स्यादिति । एवं वक्ष्यमाणे पिपठिषि इत्यत्रापि नुमभाव उपपा-

दनीयः ननु कथं स्थानिवत्त्वम् आर्द्धधातुक इत्यस्य विषयसप्तमीत्वात् । अत एवाचो यदित्यत्र तृतीये भाष्ये हलन्तात् ण्यतासिद्धेऽजग्रहणमजन्तभूतपूर्वादपि यथा स्यात् दित्स्याधित्स्यामित्युक्तम् । परसप्तमीत्वे तु ग्राग्यतो लोपाभावाद्भाष्यासंगतिः स्पष्टैवेति चेत्, सत्यम् । परसप्तमीपक्षस्यापि सत्त्वात् अत एव धिनुत इत्यादौ धिन्विकृण्व्योरचेति वकारस्याकारे उप्रत्यये चाकारस्य लोपे तस्य स्थानिवद्भावाल्लघूपधगुणाभावः । इदं चासिद्धवत्सूत्रे षाष्ठे कैयटे स्पष्टम् । न च झलन्तलक्षणे नुम् दुर्वारः कौलुप्तमिति स्थानिवत्त्वनिषेधादिति वाच्यम् । तस्यासार्वत्रिकत्वात् । अत एव ख्यत्यात्परस्य मपर्यन्तस्येति सूत्रयोरेव तदाश्रितं भाष्ये इति दीधीवेवीटामित्यत्र स्पष्टं कैयटादौ । नित्यादिति । कृताकृतप्रसंगित्वेनेति भावः । परादिति । विप्रतिषेधेनेति भावः । आप इत्यत्र दीर्घविधिः सावकाशः नुम् तु यशांसीत्यादौ । प्रतिपदोक्तत्वादिति । प्रतिपदोक्तो विधिर्बलीयानिति वचनादिति भावः । निरवकाशमिति । तस्य निरवकाशत्वे सत्येव बाधकप्रयोजकत्वादिति भावः । तदुक्तं शेषाद्विभाषेत्यत्र पञ्चमे भाष्ये शेषग्रहणमनर्थकं ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्तीत्याशंक्यानवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कबभावे सावकाशा इति । अन्ये तु क्वचिदनवकाशत्वाभावेऽपि परनित्यादि समवधाने शीघ्रोपस्थितिकत्वेन पूर्वप्रयोजकं बलवत्त्वं प्रतिपदविधित्वेनापि अत एव हे रमे इत्यादौ प्रतिपदोक्तत्वात्पूर्वमेत्वे आकारप्रश्लेषाड्ल्ड्यादिलोपो न

-प्राप्नोतीत्याशंक्यैङ्ह्रस्वादिति लोपेन समाहितं भाष्ये। एवं चात्रापी-दृशप्रतिपदोक्तत्वस्वीकारेण पूर्वं दीर्घे ततो नुमि स्वांपीत्येवेत्याहुः ॥

इति हलन्ता नपुंसकलिंगाः ।

---

## अथाव्ययानि ।

अव्ययमिति महासंज्ञाकरणमन्वर्थविज्ञानाय न व्येति विशेषं विकारं गच्छति सत्त्वधर्मान् लिङ्गसंख्यादीन्न गृह्णातीति यावत् । अतोऽत्युच्चैसावित्यादि सिध्यति । अतिक्रान्ताद्यर्थप्राधान्येन सत्त्वधर्मपरिग्रहादव्ययत्वाभावात् । तत्रावयवस्याव्ययत्वानपायाद् अव्ययादाप्सुप इति लुक्प्रसक्तेरित्याह विहितविशेषणान्नेति । नन्वत्युच्चैः सावित्यादौ कथं समासः । उच्चैरित्यास्याधिकरणशक्तिप्रधानत्वेन द्वितीयाद्यन्ततायोगादिति चेत्सत्यम् । दोपाभूतमहो दिवाभूता रात्रिरित्यादिवत् क्वचिद्वृत्तिविषये शक्तिमत्प्रधानता-स्वीकारेणादोपात् । समुदायस्यापि अव्ययत्वमाशंक्य समाधत्ते यद्यपि तदन्तेति । शब्दस्य विशेष्यत्वात्प्रयोजनं सर्वनामाव्यय-संज्ञायामिति वाचनिकस्तदन्तविधिरित्याशयः । न गौणेति । सामानाधिकरण्यसम्बन्धेन लिंगाद्यनन्वय्यर्थकबोधकत्वविशिष्टाव्य-यपदत्वेनाव्ययपदं बोधकमिति तादृशमहासंज्ञाकरणात्तादृशानां गणेऽनुकरणावश्यकत्वे इतरेषामनुकरणे मानाभावेन समुदायस्य नाव्ययत्वमिति भावः । अन्ये तु अत्रार्थः प्रधानः प्रधानयोः प्रधा-नस्यैव ग्रहणमिति न्यायेन सर्वनामसंज्ञासाहचर्येण च प्रसिद्धानुपस-र्जनीभूतस्यैव लिङ्गाद्यनन्वयिनो ग्रहणेन न समुदायस्य नाप्यवयवस्य

संज्ञा भविष्यति । एवं च विहितविशेषणमङ्गाक्षेपो वा व्यर्थ एवाव्ययात्परत्वस्याप्यभावादत्युच्चैसावित्यादेर्निर्बाधत्वमित्याहुः ॥

इत्यव्ययानि ।

---

## अथ स्त्रीप्रत्ययाः ।

ननु प्रत्ययविधौ तदन्तविधिप्रतिषेधप्रतिप्रसवेन उगिद्वर्णग्रहणवर्जमित्यनेन तदन्तलाभेऽजादीनामप्यकारान्तत्वस्याव्यभिचारादत इत्यतैव सिद्धिरित्यत आह अजाद्युक्तिरिति । येन ना प्राप्त इति परिभाषया सामर्थ्याद्बाध्यसामान्यचिन्ताश्रयणादित्याशयस्तदाह । ङीपो ङीपश्चेति । यथायथं जातेरस्त्रीविषयादयोपधाद्वयसि प्रथम इति सूत्राभ्यां प्राप्तस्येत्यर्थः । तदाहाजेत्यादिना ङीष्प्राप्त इत्यन्तेन । अजत्वजातिविशिष्टा स्त्रीत्यर्थः । अत एवाजादिवाच्यं स्त्रीत्वमित्युक्तम् । प्रत्ययवाच्यत्वे हि स्त्रीत्वस्य विशेष्यतानापत्तिः । ननु प्रत्ययवाच्यमेव तदिति चेन्न । वागादिपदे प्रत्ययमन्तरापि तद्बोधात् । ह्रस्वो नपुंसके स्वमोर्नपुंसकादिति सूत्रस्वरसाच्च । अत एव व्यावक्रोशीत्यादौ कर्मव्यतिहारे णच् स्त्रियामिति णचि णचः स्त्रियामित्यञि च ङीप् सिध्यति । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति व्युत्पत्तेर्यत्र प्रत्ययस्य वाचकत्वं तद्विषयत्वेनेहाप्रवृत्तेरित्यन्यत्र निरूपितम् । ननु ङ्याप्प्रातिपदिकादित्यादिना प्रत्ययविधौ पञ्चम्यां युक्तत्वबोधनादजादिभ्यष्टाप्स्यात्स्त्रीत्वे द्योत्ये इत्यर्थस्य युक्तत्वं तच्च प्रत्यासत्त्या प्रकृत्यर्थनिष्ठमेव टापा द्योत्यमिति कथ-

मजादीनामिति षष्ठ्यन्ततयार्थवर्णनमित्यत आह अजादिभि-
रिति । व्याख्यानात्षष्ठ्यन्तत्वेऽपि अर्थात्पंचम्यन्तलाभ इति
भावः । उक्तयुक्तेः फलमाह पंचाजीति । पञ्चानामजानां समा-
हार इति तद्धितार्थे इत्यादिना द्विगुसमासेऽकारान्तोत्तरपदो द्विगुः
स्त्रियामिति स्त्रीत्वे द्विगोरिति ङीबेव न त्वनेन टाप् । नन्वत्र
प्रत्ययविधाविति निषेधात्तदन्तत्वालाभादेव टापोऽप्रवृत्तिरेव कि-
मुक्तव्याख्ययेति चेन्न । अमहत्पूर्वग्रहणेनानुपसर्जनादिति वक्ष्य-
माणाधिकारेण च स्त्रीप्रत्ययेषु तदन्तविधेर्ज्ञापनात् । न च तद-
न्तविधावपि स्त्रियामित्यजादीनामेव विशेषणं श्रुतत्वादिति
वाच्यम् । उक्ताधिकारेण तदन्तग्रहणस्यैव स्त्रियामित्यस्य तद-
न्तविशेषणत्वमित्यर्थस्यापि बोधनात् । अत्र हीति । समासे
अजशब्दसत्त्वेऽपि समाहारनिष्ठं स्त्रीत्वं समुदायवाच्यं नाजशब्दमा-
त्रवाच्यं सामर्थ्येनाजादिमात्रवाच्यस्त्रीत्वस्य ग्रहणादिति भावः ।
सामान्येति । तेन विशेषाग्रहणम् । वन इति सूत्रेऽनुबन्धरहितस्य वन
उच्चारणात्तदनुबन्धग्रहणेनातदनुबन्धकग्रहणमिति परिभाषायाश्चतुर्थे
वामदेवादित्यत्र भाष्ये स्पष्टाया इहाप्रवृत्तेरित्याशयः । नन्वति-
धीवरीत्यादौ कथं वन्नन्तत्वाभावात्तत्राह प्रत्ययग्रहणमिति । इयं
च अंगसंज्ञा भाष्ये स्पष्टा । तद्यथा । यस्मात्प्रत्ययविधिस्तदादिप्र-
त्यये इति योगो विभज्यते गृह्यमाणे उपातिष्ठते इति शेषस्तेन
तदाद्यंशः सिद्धस्तदन्तांशस्तु येन विधिरित्यनेन सिद्धः । तेन
देवदत्तश्चिकीर्षतीत्यादौ देवदत्तादेः सन्नन्तत्वादिप्रयुक्तं कार्यं
नेति । तेनेति । वन्नन्तेनेत्यर्थः । तत्प्रातिपदिकं प्रतिविशेषण-

मिति भावः । न च कथमत्र तदन्तविधिः ग्रहणवता प्रातिपदिकेन न तदन्तविधिरिति निषेधात् । अनुपसर्जनादित्यधिकारस्यामहत्पूर्वग्रहणस्य च ज्ञापकत्वात् । सूत्रे गृहीतस्य वन इत्यस्य प्रातिपदिकत्वं नास्तीति तन्निषेधाविषयत्वाच्चेत्याहुः । न षट्स्वस्रादिभ्य इत्येनानन्तरस्येति न्यायेनाव्यवहित ङीप एव निषेधप्राप्तावपि स्त्रियां यद् प्राप्तं तन्नेति । व्याख्यानेनोभयोर्ङीप्टापोरपि निषेध इत्याशयेनोदाहरति । पञ्च चतस्र इति । ननु न तिसृचतसृ इति नामि दीर्घत्वनिषेधात्तयोर्ङीब्भावः सिद्ध इति चेत्सत्यम् । सन्निपातपरिभाषाया अनित्यतां ज्ञापयितुं तत्र तयोर्ग्रहणमिति केचित् । स्वस्रादिषु तयोः पाठो न कर्तव्य इति भाष्यकैयटयोः स्वरसः । ननु कथं षट्त्वमदन्तस्येत्याशंक्योपपादयति नलोप इत्यादिना । असिद्धत्वादिति । इदं चासिद्धत्वोपवर्णनं कार्यकालपक्षे यथोद्देशे पंचान्निति नान्ते जाताया एकदेशविकृतन्यायेनादन्तेऽपि सुलभत्वात् । न चोक्तन्यायस्य स्थानिवत्सूत्रे उपसंख्यानादनल्विधौ तत्प्रवृत्तिरिति युक्तम् । षट्त्वस्यानल्धर्मत्वेन तदाश्रयविधीनामनल्विधित्वादिति दिक् । नन्विह वहिरङ्गपरिभाषयैव सिद्धमिति चेन्न । संज्ञाकृतं वहिरङ्गत्वं परिभाषायां नाश्रीयत इति क्वाति तुग्ग्रहणेन ज्ञापनात् । तद्धि वृत्रहभिरित्यादौ ह्रस्वस्य पितीति तुकि नलोपस्यासिद्धत्वार्थं क्रियते । यदि परिभाषयैवावहिर्भूताभिसानिमित्तो नलोपो सिद्धः स्याच्चद्व्यर्थं सदुक्तार्थं ज्ञापयतीति दिक् । अन्ये त्वाहुः न ह्युक्तासिद्धत्ववर्णनोपयोगः पञ्चेत्यत्र तु स्त्रियां यत्प्राप्नोति तन्नेति । न

पडितिसूत्रार्थाश्रयणमहिम्ना भूतपूर्वषट्त्वमाश्रित्य निषिध्यते अत एव पदसंज्ञायां नलोपासिद्धत्वस्य न फलमिति नलोपस्सुवित्यत्रोक्तं भाष्य इति प्रत्ययस्थादिति। सूत्रेऽकादित्यत्राकार उच्चारणार्थो वर्णमात्रं विवक्षितमत एवैतिका इत्यादावकचीत्वं पचतकीत्यादिसिद्ध्येऽकच्यकारोऽविवक्षितः। किंच कारिकेत्यत्राकारेण व्यवधानादपि परक्काराभावेनेत्वं स्यात्। एकादेशोऽप्यचः परस्मिन्निति स्थानिवत् वा व्यवधानमेवापि परतोऽकारस्य कात्पूर्वस्येत्यर्थेऽपि निर्दिष्टपरिभाषया चेत्वं स्यादिति तु न वाच्यम्। येन नाव्यवधानमिति ककाराकाराभ्यां व्यवधानेऽपि प्रवृत्तेस्तेन रथकट्यापुत्रकाम्येत्यादावनेकव्यवाये इत्वं नेति स्थितं तत्र सुपः परो न चेति प्रसज्यप्रतिषेधः किमर्थमाश्रितोऽसमर्थसमासादिति दोषापत्तेरित्याशयेनाह। असुपः किमिति। पर्युदासाश्रयणे समुदायस्य सुब्भिन्नत्वेन सुबन्तभिन्नत्वेन च ततः परत्वादित्वमत्र स्यादिति भावेनाह। बहुपरिव्राजिकेति। परिपूर्वकाद्व्रजेर्ण्वुल्। बहवः परिव्राजका यस्यामिति समासे सुपो लुकि कृतेऽपि प्रत्ययलक्षणेनापः सुबंता यत्परत्वेनात्रेत्वानापत्तिरित्याशयः। पूर्वस्य किमिति। कादिति पंचमी श्रुत्वा तस्मादित्युत्तरस्येत्युपस्थितेः परस्येति लाभेऽपि पूर्वं टापा सह सवर्णदीर्घे परभूतह्रस्वाकाराभावादिति प्रष्टुराशयः। सिद्धांती प्रष्टुः पक्षं दूषयन् स्वसिद्धान्तमाह परस्येति। सवर्णदीर्घात्पूर्वं वार्णादाङ्गं बलीय इति तिङंते वक्ष्यमाणन्यायादपवादत्वाद्वान्त्यककारादनन्तरस्याकारस्येत्वं स्यादिति रूपासंगतिस्तदाह। कटुकेति। कटुस्त्र कटुरसवती अज्ञातार्थदीकः स्त्रियामपि कटुशब्द इत्यन्ये। अत्राहुः।

प्रत्यये कीति सूत्रयित्वा पूर्वस्योति सुत्यजम् । नयासयोरिति निषेधाल्लिंगादेव कादौ प्रत्यये इति नार्थः किंतु आप्परस्याप्रत्ययस्थककारपरस्यात इत्वमित्यादिरर्थः सामर्थ्यादाप्परत्वांशे ककारव्यवधानं सोढव्यमेवेति । भस्त्रैषेत्यनेनापि व्याख्यानान्नञ्पूर्वाणां केवलानां च संग्रहेण सकललक्ष्यनिर्वाहेऽप्यन्यथा सिद्ध्या नञित्यादि मास्त्वित्याह । तदन्तेति । स्पष्टार्थमिति च । पदांगाधिकारे तस्य तदंतस्य च सिद्धेरित्याशयः । ननु भस्त्राशब्दस्याकारस्थानिकाकारसंभवादुत्तरविधिना वैकल्पिकं त्वासिद्धौ वैयर्थ्यमित्याशंक्याह उपसर्जनार्थमिमि । अन्यस्य त्विति । अनुपसर्जनस्येत्यर्थः । उत्तरसूत्रेणेति । अभाषितपुंस्काच्चेत्यनेन बाधकाभावादित्यर्थः । भस्त्राजाज्ञास्वानां विद्यमानपूर्वकाणामपीत्वं भवत्येव । तत्र टापः कप्रत्ययात्परत्वेन सुपः परत्वाभावादसुप इति निषेधाप्रवृत्तेरितरयोस्तु नेत्वप्राप्तिरिति मनसि निधायाह एषाद्वेति । सपूर्वयोर्विद्यमानपूर्वयोः । अंतर्वर्तिनीमिति । न एतत् सु इति स्थितेऽकचि कृतेऽकृते वा नञ्तत्पुरुषे अंतरंगानपि विधीन् बहिरंगो लुग्बाधते इति त्यदाद्यत्वात्प्राक् सुब्लुकि ततोऽकचि वा पुनर्विशिष्टात्सुपि त्यदाद्यत्वे टापि समासात्पूर्वोत्पन्नसुपः प्रत्ययलक्षणेन पर एव टाविति भावः । अनेषकेति । अज्ञाता एषा एषका । ततो नञ्समासः । एवमग्रेऽप्यूहनीयम् । ननु स्वशब्दस्य चत्वारोऽर्थाः आत्मा ज्ञातिर्धनमात्मीयश्चेति । 'तत्र स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति कोशादाद्येषु त्रिषु स्त्रीत्वाभावः किं त्वन्यार्थ एव स्त्रीत्वं तत्र सर्वनामत्वादकचोऽवश्यंभावेनातः स्थानिकाकारालाभा-

त्कथमयमुदाहर्तुमुचितोऽत आह स्वशब्देत्यादि । विशेषणमिति । व्यावर्तक इत्यर्थः । संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदिति भावेनाहासंभवादिति । स्वशब्दस्य तूभयमस्ति । उक्तं च हरदत्त-मिश्रेण । 'संभवव्यभिचारौ हि स्वशब्दे काकयोः सतोः । द्वैपयोः संभवो नास्ति नान्यत्र व्यभिचारिता ॥' इति तदेव - टयति स्वशब्दास्त्विति । नित्यमेवेत्वमिति । अत्र त्वकचि कृते आतः स्थानिकाकाराभावात् प्रत्ययस्थादित्यस्यैव प्रवृत्तेरिति भावः । अभाषितपुंस्काच्चेत्यत्र स्त्रीविषयाद्येति स्वनिते तु न पुंसि दामेत्य-मरोक्त्या स्त्रीनपुंसकत्वपर्यवसानाद्दामशब्दात् डाप्यज्ञातादौ के दामिका दामका दामाकेति रूपत्रयासिद्धिरिति । परंतु पंचमीश्रुत्या परस्येति लब्धमपि त्यक्त्वा विहितस्ये व्याख्यातं तस्य किं फलं तदाह । बहुव्रीहेरिति । अविद्यमाना खट्वा यस्या इति विग्रहे शेषाद्विभाषेति समासांतस्य कपो वैकल्पिकत्वात्तदभावे गोस्त्रियोरिति ह्रस्वे ततश्चापि सुप्यज्ञातादौ कप्रत्यये सुब्लुकि केऽण इति ह्रस्वे पुनश्चाप्यभाषितपुंस्काद्विहिताकारस्थानिकाकाराभावे-नैतद्विकल्पाभासौ प्रत्ययस्थादित्यनेन नित्यमेवेत्वम् । परविशे-षणत्वे तु तादृशखट्वशब्दात्परत्वेन विकल्पः स्यादेवेति दोष इति भावः । शैषिके कपीति । न खट्वास्वित्यवस्थायां कपि सुब्लुकि प्रत्ययलक्षणेन भागद्वयस्य सुबंतत्वात्समाससंज्ञायां समासांता इति शास्त्रमहिम्ना कबंतस्यैव समासत्वेनोपसर्जनस्त्री-प्रत्ययांतात्समासरूपप्रातिपदिकाभावाद्गोस्त्रियोरिति ह्रस्वाभावे केऽण इत्यस्य न कपीति निषेधेऽप्यापोऽन्यतरस्यामिति ह्रस्वे कपः

प्राग्वर्त्तिखट्वशब्दात्परस्यापोऽभाषितपुंस्काद्विहितत्वेनाकारस्थानिका-
कारस्यायं विकल्पः । ह्रस्वाभावे तु अखट्वाकेतीति भावः ।
वक्ष्यमाणेति । वचेर्लृट् । लृटः सद्वेति शानच् । स्यता-
सीति स्यः । कुत्वषत्वे आने मुगिति मुक् । टित्त्वादुगित्त्वाच्चेति ।
न्यायसाम्यादुभयोरुपादानं, स्थानिवत्त्वेनेत्यर्थः । एतेन लृटि
ऋकारस्याप्यनुबन्धत्वात्तदनुबन्धकपरिभाषया न टित्प्रयुक्तङीपः
प्राप्तिरत उगित्वाच्चेत्युक्तमित्यपास्तम् । उक्तपरिभाषया ऋकारेऽ-
प्यग्राहकत्वसाम्यात् । टिड्ढेति सूत्रेऽनुबन्धग्रहणात्परिभाषाया
अप्रवृत्तेश्च । न चाल्विधित्वात्कथमिह स्थानिवत्त्वं, नल्यपीति ज्ञाप-
केन टित्त्वादेरशास्त्रीयस्यातिदेशोऽनुबन्धकार्येऽप्यनल्विधाविति
निषेधाप्रवृत्तिश्चेति ज्ञापनात् । तद्धि प्रदाय प्रधायेत्यादौ क्त्वोऽल्यपि
तस्य स्थानिवत्त्वेन कित्त्वमाश्रित्य घुमास्थागापा जहाति सां हलीति
कित्त्वनिमित्तेत्वप्राप्तौ तन्निवारणाय क्रियते । तच्चानल्विधाविति
कोटचैव स्थानिवत्त्वनिषेधादित्वप्राप्तिरेवेति व्यर्थं सदुक्तार्थं ज्ञाप-
यतीति । अत एव रमायामित्यादौ परत्वात् ङेराम्नद्याम्नीत्यामि कृते
स्थानिवद्भावेनामो ङित्त्वाद्याडागमः सिध्यति । समाधत्ते ङित्त्वेनेति ।
तेन सूत्रेण लिङादेशानां तिबादीनां यासुडागमस्य ङित्त्वं विधी-
यते । नच स्थानिवत्त्वस्योक्तरीत्या बाधाभावात्तेनैव ङित्त्वे सिद्धे
व्यर्थमिति लाश्रयमादेशानां न भवतीति ज्ञाप्यते । तेनाऽचिनोद-
मार्ट् इत्यादौ स्थानिवद्भावेन तिपो ङित्त्वेन क्ङिति चेति निषेधप्रा-
प्तावप्यनया रीत्या स्थानिवद्भावेन ङित्त्वनिषेधाद्गुणवृद्धी सिध्यतः ।
प्रकृते लकाराश्रयटिदुगिद्रूपानुबन्धकार्यं ङीब् न भवति । ननु

स्तुयादित्यादावनिग्लक्षणवृद्धिप्रतिषेधार्थं चिनुयुरित्यादौ जुसि चेत्यस्य निषेधार्थं च यासुटो ङित्त्वमास्ताम् । उतो वृद्धिर्लुकि हलीत्यत्र हि उत इति निर्दिष्टस्थानिकतया इक्परिभाषानुपस्थितिः अनियमे नियमकारिणी परिभाषेति न्यायात् । जुसि चेति च क्ङिति चेत्यस्यापवाद एव । तथा च स्थानिवद्भावलब्धङित्त्वं स्तुयाच्चिनुयुरित्यादौ वृद्धिगुणौ निषेद्धुं नालं स्यात् । पुनर्ङित्त्वसामर्थ्याचूभयोर्निषेधो भवति । तस्मात्कथं ङित्त्वमुक्तार्थं ज्ञापयेदिति चेन्न । उत औदिति वक्तव्ये वृद्धिग्रहणेन संज्ञापूर्वको विधिरनित्य इति ज्ञापनात्स्थानिनिर्देशेऽपीक्परिभाषोपस्थितयेऽनियम इत्युक्तन्यायस्यानित्यत्वज्ञापनाच्च । क्सस्याचीत्यनुवर्त्याजादौ जुसि गुणः स्यादिति जुसि चेति सूत्रार्थेन चिनुयुरित्यादावजादित्वाभावेनादोषाच्चेति दिक् । ननु हलः श्न इत्यत्र तृतीये भाष्ये तु सार्वधातुकमपिदिति सूत्रान्तर्गतमपिदिति योगं विभज्य गाङ्कुटादिभ्य इत्यस्माङ्ङितमनुवर्त्यावृत्तिं चाश्रित्य प्रसज्यप्रतिषेधं विधाय ङिच्च पिन्न भवति पिच्च ङिन्न भवतीति वाक्यार्थद्वयं वर्णितं, तेन ब्रूयादित्यत्र ब्रुव इतीण् न भवति । आतिदेशिकस्य पित्त्वस्यौपदेशिकेन ङित्त्वेन बाधनात् । अचिनोदऽमार्ड् इत्यादावौपदेशिकेन तिबादीनां पित्त्वेनातिदेशिकत्वाश्रयस्य ङित्त्वस्य बाधनाद्गुणवृद्धी भवतः, अतिदिष्टादुपदिष्टं बलीय इति न्यायात् । एवं च मृज्यादित्यादावौपदेशिकेन पित्त्वेनातिदेशिकस्य ङित्त्वस्य बाधनाद वृद्ध्यादित्राणाय यासुटो ङित्त्वमावश्यकमिति कथमुक्तार्थं ज्ञापयेदित्याशंक्य गत्यन्तरमाह श्नः शानचः ङित्त्वेनेति । शानचः ङित्त्वं हि तिङ्-

शित्सार्वधातुकमिति सार्वधातुसंज्ञया सार्वधातुकमपिदित्यनेन ङित्वे-क्ङिति चेत्यनेन पुषाणेत्यादौ गुणनिषेधार्थं क्रियते । तच्च स्थानि-वद्भावेन श्नाप्रत्ययस्य शित्त्वेनैव सिद्धे व्यर्थं सदुक्तार्थं ज्ञापयति । तथा चानेन ज्ञापितार्थेन न ल्यपीत्येतज्ज्ञापितार्थस्य बाधादिह न ङीप् स च बाधो न सार्वत्रिकोऽतिप्रसङ्गात् तदाह । क्वचिदिति । लक्ष्यानुरोधेन व्यवस्थेति भावः । एतेन ज्ञापकस्य सजातीयविषय-तायाः न्याय्यतया शानजादेशस्य लाश्रयकार्याभावज्ञापकतानुप-पत्तिः । अत एव सार्वधातुकादेशे अनुबन्धो न स्थानिवदित्येव ज्ञाप्यं शरीरमुद्भावितं भाष्य इति मन्दोक्तमपास्तम् । अचिनोदमा-र्डित्यादौ गुणवृद्धिसिद्धये भाष्ये सामान्यापेक्षस्यैवाभ्युपेयत्वात् । सार्वधातुकादेश इत्यत्र बहुव्रीह्याश्रयणेन लकारस्यापि ऋोडीकारश्चेति दिक् । ननु शानचः शित्त्वमपि तत्सूत्रे भाष्ये प्रत्याख्यातं, तद्यथा किमर्थः शकारः ज्ञापनार्थ इत्युक्त्वा ज्ञापनफलमुक्तरीत्या दूषयित्वा तस्मान्नार्थोऽनेनेति । तथा च कथमुक्तार्थज्ञापनेन प्रकृते ङीबभाव इति चेत्सत्यम् । सत्यभिधाने वक्ष्यमाणेनेत्यादावजा-दिपाठादेव टाप् स च ङीबादेर्बाधक इत्युक्तं प्राक् । अजादि-स्त्वाकृतिगणः । न चात्र विवादितव्यम् । नमुने इत्यत्र टाया-मादेश इति फणिभाष्यप्रयोगात् । अजायां छागोनि टाबन्तः प्रयोगो दृश्यतेऽतः छागशब्दोऽप्यजादिष्विति । प्रथमाध्याय-चतुर्थचरणे चमसवदविशेषादिति सूत्रे श्रीमदाचार्यशंकरभगवत्पू-ज्यपादभाष्ये वाचस्पतिकृतभामत्यां चोक्तेश्चेति प्राहुः । ननु टिड्ढेत्यत्राणग्रहणाच्छत्रा शीलमस्या इत्यर्थे शीलं छत्रादिभ्यो ण

इति विहितणान्ते चौरीत्यत्र कथं ङीबित्यत आह ताच्छीलिक इति । शीलार्थके णेऽप्यण्कार्यं भवति कार्मस्ताच्छील्ये इति ज्ञापकात् । तत्र हि अन्नित्यनेनाणि विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते । यदि च णप्रत्ययेऽण्कार्यं न स्यात्तर्हि किं तेनेति । ताच्छीलिक इत्युक्त्या दण्डैः प्रहरणमस्यां क्रीडायामित्यर्थे तदस्यां प्रहरणमिति णप्रत्यये दाण्डेति टाबन्त एवेति बोध्यम् ॥ प्राचां ष्फ तद्धित इत्यत्र यञ एवानुवृत्तये टिड्ढेति सूत्रात्पृथग्योगविभक्ते यञश्चेति सूत्रे यद्यप्यपत्यप्रत्ययग्रहणं कर्तव्यमित्येव वार्त्तिककृता पठितं तथाप्यपत्याधिकारं तत् । तादृशश्च गर्गादिभ्यो यञ् इत्यनेनैव विहितस्तदन्तादेव च ङीप् नान्यस्मादित्यभिप्रेत्याह अनपत्याधिकारस्थादिति । अपत्याधिकारस्थभिन्नादित्यर्थः । अपत्यार्थभिन्नादपत्यार्थेऽप्यपत्याधिकारस्थभिन्नाच्च न ङीबिति वर्तुलार्थः । आद्यमाह द्वैप्येति । द्वीपादनुसमुद्रं यञ् इति यञ् । अन्त्यमाह दैव्येति । प्राग्दीव्यतीय इति । तेन, दीव्यति जयतीत्यतः प्राग् येऽर्था अपत्यादयस्तत्रायं विहितो न तु तस्यापत्यमित्यधिकारे इत्यर्थः । यदा त्विदं वार्त्तिकम् । प्रत्याख्यातं भाष्ये तदा तदुक्तयोगविभागाकारप्रश्लेषादिना यञश्चेत्यत्रापत्याधिकारस्थस्यैव यञो ग्रहणमिति व्याख्यानेन चोक्तार्थः क्रोडीकरणीय इति बोध्यम् । प्राचां ष्फ इत्यत्र तद्धितग्रहणं किमर्थमित्याशंक्याह प्रातिपदिकत्वमिति । ष्फप्रत्ययान्तस्य प्रातिपदिकसंज्ञा यथा स्यादित्येवमर्थं तद्धितग्रहणं तेन पिङ्गेरित्यत्र ङीष् सिध्यति । न च पिङ्गेरित्यत्र प्रातिपदिकविशेषणे सत्येवं

स्यात्किंतु तस्यैव फलाभावेन व्यर्थत्वादिति वाच्यम् । त्रपा क्षमा मृजेत्यादौ धातोः षितो ङीष्वारणफलकत्वात् । ननु तत्र षितोऽङ्प्रत्ययसंपादनेन चरितार्थत्वादिह न स्यादिति कैयटोक्तेः, न च यञंते यस्येति चेति लोपार्थं तत्तद्धितग्रहणमिति वाच्यम्, सवर्णदीर्घेणापि सिद्धेरिति चेत्सत्यम् । इञंतादपि ष्फः क्वचित्स्यादिति ज्ञापनार्थं तद्ग्रहणात् । तेनासुरेरुपसंख्यानमिति सिद्धमित्याहुः । ननु स्त्रियामेव ष्फविधानादुक्तार्थानामप्रयोग इति न्यायेन ङीष् न स्यादत आह । षित्त्वसामर्थ्यादिति । ननु षित्त्वसामर्थ्यात् प्रातिपदिकादेवेकारो न भविष्यतीति भाष्योक्तेः कथमीदृक् सामर्थ्यं व्यवस्थाप्यते । किं ततः तावतापीदृशमन्तरा सामर्थ्यस्योपक्षीणत्वात् । उक्तेऽपीति । प्रकृत्या स्त्रीत्वार्थे उक्ते ष्फप्रत्ययेन द्योतितेऽपीत्यर्थः । सिद्धान्तसंमते पंचकं प्रातिपदिकार्थ इति पक्षे प्रत्ययानां द्योतकस्यैव युक्तत्वादिति कारकादौ निरूपयिष्यते । द्योतितविषये उक्तार्थानामित्ययं न्यायो न प्रवर्तते । व्यतिलूनीते इत्यादौ द्योतकसमुच्चयस्येष्टत्वात् । द्विर्बद्धं सुबद्धं भवतीति न्यायात् । अत्रेदं षित्त्वं ज्ञापकम् । अत एव येनांगविकार इति सूत्रे भाष्ये अक्ष्णा काण इति प्रयोगः संगच्छते । तत्र काणशब्दोऽक्षिगतविकारवाचकः किंच हरत्यऽघं संप्रतीति माघप्रयोगोऽप्युपपद्यते इति दिक् । द्योतकाविषयेऽप्युक्तार्थानामिति प्रवर्तते क्वचित् गमकत्वादिति कारकप्रघट्टके वक्ष्यते । कुण्डोध्नी धेनुकामिति । कुण्डवदूधो यस्य धेनूनां समूहस्य इत्यर्थेऽचित्तहस्तिधेनोष्ठक् इसुसुक्तांतात्कः तद्विधौ स्त्रियामिति । तच्च वार्तिकम् । नन्विहैव बहुव्रीहेरूधसो

टीप् नश्चेति सूत्र्यतामनङ् चेति वा समासान्तेषु ऊधसोऽनङ् इति सूत्रं त्यक्त्वा धनुषोऽनङ् इति सूत्र्यतामिति चेन्न । कबभावे लब्धावसरस्यास्य पक्षे कपा बाधापत्तेः । यथान्यासे तु अनङः समासान्ततया शेषत्वाभावान्न कप् । नन्वूधसोऽनङिति सूत्रेऽनादेश एवास्तु किं ङित्करणेनेति चेन्नैवम् । धनुषश्चेत्येतदर्थतया शार्ङ्गधन्वेति वत्त्वेन फलकत्वात् । न चेहार्थमप्यावश्यकमन्यथाऽल्लोपो न इति न स्यादनो लाक्षणिकत्वादिति वाच्यम् । भाष्यवार्तिकविरोधेन लक्षणप्रतिपदोक्तपरिभाषाया इहाप्रवृत्तेरिति वदन्ति । ननु ममेयामित्यर्थे युष्मदस्मदोरन्यतरस्यां खञ् चेत्यण् तवकममकावेकवचने इति ममकादेशे सत्यणंतत्वाट्टिड्ढेति सिद्धेऽत्र तद्ग्रहणं व्यर्थमत आह नियमार्थमिति । नित्यं सज्ञाछन्दसोरिति संपूर्णानुवृत्तेः संज्ञाछन्दसोरेव ङीबिति नियमशरीरम् । व्यावर्त्यमाह लोकेऽसंज्ञायामिति । ननु नेदं व्यावृत्तिफलम् । प्रत्ययस्थककाराभावप्रयुक्ते त्वामासावपि मामकनरकयोरिति वार्त्तिकेनापि प्रकृतिककारे इत्वविधानेनैव ङीपोऽप्रवृत्तेरिति चेन्न । आपूपरत्वाभावेऽपि सामर्थ्यादित्वकरणेन सिद्धार्थत्वात् । अन्तर्वादिति । मतुप्पातिवादिति वत्वं च नुक्संनियोगेन नियम्यते । किमविशेषणेनेत्याह गर्भिण्या जीवत्पतिकाया चेत्युक्तं भाष्ये तदेवाह गर्भिण्यामित्यादि । अन्यथा सिध्यभावमाह वत्रेत्यादिना । अन्तःशब्दस्य मध्ये इत्यर्थकस्य तदेवाह अधिकरणेति । शब्दशक्तिस्वभावादिति भावः । एवं चास्यान्यद्वारैव क्रियायोग· सप्तम्यर्थस्यैवेति भाव इत्याह अस्ति सामानाधिकर-

ण्येति । तदस्यास्त्यस्मिन्निति मतुबिति सूत्रस्य तदिति प्रथमान्तात् षष्ठ्यर्थे सप्तम्यर्थे चास्तिना सामानाधिकरण्ये सति मतुप्स्यादित्यर्थे प्रथमांतस्यास्तीत्यत्र तिङर्थेन सामान्यकर्त्राऽभेदान्वयेन ततो मतुप् सिध्यति । प्रकृते च तदभावादप्राप्तिरिति भावः । ननु तत्सूत्रे शक्तिस्वभावादेव बहुव्रीहाविव वर्त्तमानकालास्त्यर्थान्तर्भावेन मतुप् । अस्तिग्रहणं तु अस्तिशब्दादस्तिसामानाधिकरण्याभावेनाप्राप्तमतुपो विधानार्थं तेनास्तिमानिति सिद्धं, सत्ताकर्तृधनवानिति तदर्थं इति स्पष्टं भाष्ये । एवं चात्रापि तथैव मतुबस्त्विति चेन्न । तेन प्राप्यमांतादेव मतुपो विधानात् । कथमन्यथाऽस्तिना सामाधिकरण्यं नास्तीन्यप्राप्तो मतुप् निपात्यतेऽन्तर्वदिति भाष्यकारा व्याचक्षीरन्नित्यलम् । ननु पत्युर्न इत्यत्राधिकारलब्धमनुपसर्जनादिति तच्च पत्युरिति षष्ठ्यंतस्यानुगुण्याय षष्ठ्यंतं कल्प्यतेऽनुपसर्जनस्य पत्युरिति तत्सम्बन्धिनोऽनुवृत्तिरित्याशंक्याह अनुपसर्जनस्येत्यादि । उत्तरार्धं, पूतक्रतोरित्याद्यर्थम् । न तु पत्युरिति । अयं भावः । सपूर्वस्येत्यत्र सहशब्दो विद्यमानवाची । पूर्वशब्दः पूर्वावयवपरो व्याख्यानात् । तत्र केवलपतिशब्दस्य विद्यमानपूर्वावयवत्वासंभवादव्यभिचाराद्य सामर्थ्यात्पतिशब्देन

क्षणं, तेन पतिमतिक्रान्ताऽतिपतीति सिध्यति । दृढपत्नी । दृढः पतिर्यस्येति विग्रहः इह पत्यन्तो नोपसर्जनः किन्तु पतिरेवेति विकल्पासिद्धिः । बहवो वृषलपतयो यस्या इति कर्मधारयोत्तरपदबहुव्रीहौ वारणायेहार्थोऽप्यनुपसर्जनपदसम्बन्ध इत्यन्ये । तदयुक्तं, भाष्यकैयटविरोधात् । ननु विद्यमानपूर्वावयवस्येत्यनेन समास इति पर्यवस्यते तत्कथमन्यत्रेति शङ्कते । व्यस्ते कथमिति । नन्वेतत्सूत्राप्राप्तेरपि पत्युर्न इत्यनेनैतत् सिद्धे शंकैव नोदेति । नैवम् । पूर्वसूत्रे यज्ञसंयोगः यज्ञसम्बंधः स च यज्ञफलप्रतियोगिकैश्वर्य्यवत्त्वं तदाशयेन तत्कर्तृकेत्यादिरर्थ उक्तः । यज्ञे तु त्रैवर्णिकानामेव सभार्याणामधिकारो न तु शूद्रस्य यत्कर्तव्यं तदनया सहेति श्रुत्या बोधितार्थश्चोक्तो दम्पत्योरित्यादिना । तथा च श्रुत्यधिकारेणा तथा प्रयोगो नान्तजस्येत्यदोषात् । तदुक्तं भाष्ये यज्ञसंयोग इत्युच्यते, तुषजकस्य पत्नीति न सिध्यति, उपमानात्सिद्धम्, पत्नीव पत्नीति तदाह । उपचारादिति । अग्निसाक्षिकपाणिग्रहणाश्रयणादिति भावः । नन्वेवं यज्ञसंयोग इत्यस्य व्यावर्त्यालाभाद्वैयर्थ्यमित्याशंक्य स्वयं गत्यन्तरमाह यद्वेति । पतिरिवाचरतीति उपमानादाचार इति क्विपि पतयति ततः कर्तरि क्विप् कृत्संज्ञः अत्र दृढप्रमाणाभावात् प्रौढिः । यज्ञसंयोग इति तु वृषलस्य पतिः स्त्रीति प्रयोगसाधनेन चरितार्थमिति प्रथमभाष्योक्तिसहायं समाधानमेव ज्याय इत्यलं भाष्यकैयटविरुद्धकल्पनया । सपूर्वस्य किमिति । पूर्वावयवपरः पूर्वशब्दः । किमर्थ इति प्रश्नः । गवां पतिरिति । स्वामिनीत्यर्थः ।

पातीति पतिरिति क्रियाशब्दस्य त्रिलिङ्गत्वात्स्त्रीत्वमिति संक्षेपः । मातरि षिच्चेति । पितृव्यमातुलेति सूत्रस्थमिदं पितामहीति सिद्ध्यर्थम् । दंष्ट्रेति । दंशेर्दाम्नीशसेति करणे ष्ट्रन् । अयमजादिषु पठ्यते गौरादिषु मातामहीपाठोऽनार्ष इत्यन्ये । ननु कमण्डलुरूपामत्रार्थातिरिक्ते कुडि दाह इत्यस्माद्गुरोश्च हल इत्यप्रत्ययान्तः क्रियाशब्दो भवतु प्रत्युदाहरणमन्यो वारणीय इत्याशंक्याह यास्त्विति । अमृते जारजः कुण्डो मृते भर्तरि गोलक इति कोशाज्जातिवाची । ङीबिति । जातेरस्त्रीविषयादित्यनेन तत्र हि यः स्त्रीलिङ्गे नियतो न तस्माद्विधीयतेऽयं तु न तथाभूतः । कुंडी कमण्डलौ जारात्पतिवत्नीसुते पुमानिति मेदिनीकोशादुक्तकोशाच्च । ननु मेदिनीकोशात्पिठरे तु न ना कुण्डमिति विश्वकोशात्स्त्रीनपुंसकयोः कुण्डशब्दस्य बोधनात्कमण्डलुपिठरयोः पर्यायत्वेनैकार्थात् स्त्रियामनियतत्वेन जातेरस्त्रीति ङीपि सिद्धे जानपदकुण्डेत्यस्य नियमार्थत्वेन कथमत्रातिरिक्ते जातिलक्षणे ङीपित्याशंक्य अनेकविधसंस्थानेष्वमत्रेषु कुण्डव्यवहारेण कुण्डत्वे जातित्वस्यैवाभावात्तेनाप्राप्ते जानपदेत्यनेनैव विधीयते इत्यभिसन्धायाह अमत्रेहीत्यादि । स्त्रीविषयत्वादिति तूपलक्षणं, तस्मादुक्ते कुंडीति सिद्धम् । अन्ये तु कमण्डलुसंस्थानस्यानुगतत्वात्कमण्डलुरूपामत्रवाचिनो जातित्वमस्त्येवेति जातेरिति सिद्धे जानपदेति नियमार्थम् । अमृते भर्तरि जारजायां कुण्डेत्यवेत्याहुः । ततः किमिति । नन्वेतदभावे अत इति संबन्धे शुचिरित्यादौ न दोष इत्याशंक्य खरुसंयोगोपधादिति निषेधसामर्थ्यान्नात्रात इत्यनुवर्तते इति

प्रश्नः । शुचिरिति । शुचेरौणादिकः कित् इप्रत्ययः । उणादीनामव्युत्पन्नत्वात् कृदिकारादित्यस्याप्यप्रवृत्तेरनेन ङीप्स्यादित्युत्तरम् । अन्ये त्वौणादिके व्युत्पत्तिपक्षस्यैव सिद्धान्तितत्वादत्र कृदित्यनेन ङीप इष्टत्वान्नेदं प्रत्युदाहरणं किन्तु शुक्लेति । तत्र स्वाङ्गेति कोटयोत इत्यस्याभावेऽत इत्यस्य सम्बन्धाभावबोधनद्वारेकारान्तत्वादेव ङीप् पर्यवसानेऽपि ततोऽपि परत्वात्संयोगोपधेत्यनेनाकारादीनामपि संभवात्ततो ङीप्बोधनादित्याहुः । ननु स्वमङ्गं स्वाङ्गमित्यर्थश्चेत्सुमुखा शालेत्यत्रापि स्यात् मुखस्य शालागत्वात्सुकेशी रथ्येत्यत्र च न स्यात्केशानां रथ्यागतत्वाभावादित्यतिव्याप्त्यव्याप्तिपरिहारायाह स्वाङ्गं त्रिधेति । स्पर्शवद्द्रव्यपरिमाणं मूर्तिः । प्राणीति । मुखनासिकासञ्चारी वायुः प्राणः सोऽस्त्यस्य विकारो वातादिवैषम्यम् । एतच्चतुष्टयमेकं लक्षणं तच्चातिकेशादावस्ति इतरत्र तु नास्तीत्याह सुमुखेत्यादिक्रमेण । इदानीं सुकेशी रथ्येत्यादौ केशस्य प्राणिस्थत्वाभावेन ङीषोऽप्राप्तौ द्वितीयं लक्षणमाह अतत्स्थमिति । न तस्मिन् प्राणिनि तिष्ठतीति । तत्र प्राणिनि दृष्टं तदपि स्वाङ्गमित्यर्थस्तदाह अप्राणिस्थस्येति । ननु सुस्तनी प्रतिमेत्यत्र प्रतिमागतस्तनस्य प्राणिनि कदाप्यदृष्टत्वान्न स्यादिति तृतीयं लक्षणमाह तेनेति । अप्राणिनोऽपि स्वाङ्गं यदि तेन तज्जातीयेन वस्तुना प्राणी यथा संबद्धस्तथा प्राणी चेत्संबद्धस्तदपि स्वाङ्गमित्यर्थस्तदाह प्राणिवदिति । इदं च स्पष्टं भाष्यकैयटयोः स्वाङ्गाच्चो, नासिकोदर, नखोडा, सहनञ् इति पाठक्रमे उत्सर्गनिषेधयोर्विप्रतिषेधाभावेन कल्याणक्रोडेत्यादौ सावकाशेन

न क्रोडादीत्यनेन नासिकोदरयोरपि निषेधे प्राप्ते निरवकाशत्वेनाय- मपवाद इत्याह द्वयोरिति । ननु वाच्यसामान्यचिन्तायाः सह नञित्यपि वाध्यतामत आह पुरस्तादिति । लक्ष्यानुरोधेन वाच्य- विशेषचिन्तैवाश्रितेति भावः । अत एव सहनञ् इत्यादि वक्ष्यति समनन्तरमेव । एतन्न्यायेन स्वांगादिति वाधितं न स्यादिति न्याया- न्तरमाह मध्येऽपवादेति । मध्येऽपवादाः पूर्वान् विधीन् वाधंते नोत्तरानिति न्यायशरीरम् । पूर्वोपस्थितवाधनेन नैराकांक्ष्यमस्य वीजम् । ननु वाच्यसामान्यचिन्तामाश्रित्य सर्वं वाध्यतां किमुक्त- न्यायद्वयानुसरणेनेति चेन्मैवम् । सहनञित्यस्यापि वाधापत्तेः । न्यायाविमौ चात्रैव स्पष्टौ भाष्ये । परत्वादिति । सहेत्यादिपूर्वाति- रिक्ते चरितार्थत्वात् निपातानामनेकार्थत्वादाह इति शब्दः प्रकारे इति । तथा च भाषायामिति न कार्यं दीर्घजिह्वी च च्छन्दसीत्यतः छन्दसीत्यस्य दिक्पूर्व वाह इति सूत्रयोरसंबंधेनास्व- रितत्वादत्राप्यसम्बन्धसिद्धेः । स च भिन्नक्रम इत्याह अनन्तर- मिति । प्रकारस्य सादृश्यार्थत्वादाह छन्दसीति । अतिदिष्टस्य कादाचित्कत्वादाह क्वचिदिति । तेन सखा सप्तपदी भवेत्यपि सिद्धम् । अन्ये तु पूर्वसूत्रयोरपि छन्दसीत्यस्यानुवृत्तेर्भाष्ये दृष्ट- त्वादिहापि तत्संवन्धे प्राप्ते तन्निवृत्तये भाषायामिति । इति शब्दश्च- कारार्थं तेन छन्दस्यपीत्याहुः । केचित्तु तादृशभाष्यस्य प्राचीन- पुस्तकेष्वदर्शनान्नानुवृत्तिरिति वदन्ति । ननु भिन्नेष्वभिन्नाभिधान- वोधहेतुर्नित्यमेकमनेकानुगतं सामान्यं जातिरिति दर्शनसिद्धं तच्च शुक्लादिगुणेऽप्येकत्वनित्यत्वपक्षेऽतिव्याप्तं जननेन प्राप्यते सा जाति-

रित्यपि युवत्वादावव्याप्तमिति का सा जातिरित्यत आह आकृ-तीति । आकृतिरवयवसन्निवेशो गृह्यते ग्रहणेऽतिकरणे ल्युट् सा-मान्ये नपुंसकम् । आकृतिर्ग्रहणं यस्या इति विग्रहस्तदाह अनुग-तेति । ईदृशाकारो गौरित्याकृत्युपदेशादिव्यंग्येत्यर्थः । तटीति । जलसमीपदेशविशेषो हि तटम् । ननु बालाद्यवस्थाभेदभिन्नानेकदे-हवृत्तिदेवदत्तत्वादेराकृतिव्यंग्यत्वेन लक्षणमतिप्रसक्तमिति चेन्मै-वम् । समानकालिकानेकव्यक्तिवृत्त्यनुगतसंस्थानव्यंग्येत्यर्थात् । अवस्थाभेदेऽपि तद्भेदाप्रतीतेश्च स एवायमिति प्रतीतेश्चेति दिक् । ननु ब्राह्मणक्षत्रियादिव्यावृत्तावयवसंस्थानभावाद् वृषलत्वादीनां जातित्वं न स्यादतो लक्षणांतरमाह । लिङ्गानामित्यादि । इयमपि जातिरित्यर्थः । सर्वाणि लिङ्गानि न भजतीति सर्वशब्दस्य लिङ्गेन सापेक्षत्वेनासामर्थ्ये भाष्यप्रयोगप्रामाण्यात् णिवसमासौ आख्यात-माख्यानमुपदेशः निर्ग्राह्या नितरां ग्रहीतुं शक्या तदाह असर्वलि-ङ्गेति । वृषलीति । एकत्र व्यक्तौ वृषलत्वे उपदिष्टे त्वतदपत्यत-त्सहोदरादौ वृषलत्वं सुग्रहमिति भावः । ननूक्तजातिलक्षणाभ्या-मौपगवी कठीत्यादेरसंग्रहोऽनुगतसंस्थानव्यंग्यत्वाभावात्सर्वलिङ्गत्वा-च्चेत्यतस्तृतीयं लक्षणमाह गोत्रमिति । गोत्रपदार्थमाह अपत्येति । चरणपदेन विवक्षितमर्थमाह शाखेति । शाखाया अध्येतेति विग्रहः । कठी बह्वृचीति । कठेन प्रोक्तमधीते वैशंपायनान्तेवासि-त्वाण्णिनेः कठचरकाल्लुक् अध्येत्रणस्तु प्रोक्ताल्लुक् । बह्वय ऋचो-ऽध्येतव्या यस्याः सा ऋक्पूरित्यप । न स्त्रीशूद्रौ वेदमधीयाता-मिति श्रुत्यध्ययननिषेधेऽपि तद्रूपत्वात्ताच्छब्द्यमित्याधिकं नागे-

शीये। नन्वलाबूरिति भाष्योदाहरणादुत इति न संबध्यते कथमु-कारांतत्वलाभोऽत आह पर्युदासादिति। स च सदृग्ग्राहीति भावः। ऊङः फलं दिदर्शयिषुस्तृतीयांतमुदाहरति अलाब्वेति। नोङ्धात्वोरिति। ऊङो धातोश्च परे शसादय उदात्ता न स्युरिति तदर्थः। एतदर्थमेव ङकारः कृतोऽन्यथा यवाग्वेत्यादावपि निषेधः स्यात्। ननूङि दीर्घोच्चारणमसांप्रतिकम्। प्रयोगाणां सवर्णदीर्घेणैव प्रतिपत्तेः। न च श्वश्रूरित्येतत्साधनार्थं श्वशुरः श्वश्र्वेति निर्देशा-त्सिद्धेः। सत्यप्यूङि तन्निर्देशेनैवान्त्यकारलोपोऽन्यथादिमस्यापि लोपापत्तिः। ङ्याविवत्यत्र चतुर्थे भाष्ये श्वश्रूरित्येतदूदंत-मव्युत्पन्नं प्रातिपदिकमिति स्वरसात्तस्माद्धृस्त्यादिपठितं श्वशुरस्येति वचनमनादेयमिति चेन्न। प्रश्लेषेणोकारद्वयप्रतिपादनद्वारा ब्रह्मबं-धुरित्यादिबहुव्रीहौ परकार्यनिवृत्त्यर्थत्वादिदं स्पष्टं भाष्ये। ननूरु-शफयोरेकार्थत्वाभावात् व्यधिकरणत्वेन समासार्थासंगतिरित्या-शंक्य शफं क्लीबे खुरः पुमानित्यमरोक्तेऽपि शफः खुरे गवादीनां मूले विटपिनामपीति हेमचन्द्रोक्तेः। शफाविव जनुराणेति श्रुतेश्च शफस्य पुँल्लिंगत्वमपीति ध्वनयन्नाह शफावित्यादि। इवेति नोप-माद्योतकं किंतु फलितार्थकथनपरमित्याह उपचारादिति। शफश-ब्दप्रवृत्तिनिमित्तस्योरुपदार्थे आरोपाल्लक्षणयेति भावः। शक्यताव-च्छेदकारोप एव लक्षणेत्यन्यत्र विस्तरश्चिन्तामणौ च। ननु वार्त्तिकं व्यर्थमाद्यस्य समो वाहितततयोरिति निष्पन्नस्यैकदेशविकृ-तन्यायेन संहितेति सूत्रेणैव सिद्धेः। अन्त्यस्य सहशब्दस्य सर्व-स्याप्यूरुसहितत्वेन सहोरूरिति प्रयोगस्यैवाभावादित्याशंक्याद्ये

आह हितेनेति । विद्यमानं हि तत्तयोरिति वक्तव्यार्थः । अंत्ये आह सहेते इति । निबन्धभारं रतिश्रमं चेति शेषः । अस्तु सहो विद्यमानार्थक एवमपि न दोष इत्याह यद्वेति । अतिमनोहराऽऽकृत्यूरू यस्या इत्यर्थः । कमलानि कमलानीतिवदित्यलंकारपरिपुष्टिः इदं कैयटे स्पष्टम् । संज्ञायां किमिति । ऊङुत इत्यत्र मनुष्यजातेरित्यनुवृत्तिरत एव पङ्गोश्च बाहन्तात्संज्ञायामिति चरितार्थो तथाप्यविशेषात्संज्ञाया कद्रुकमंडल्वोः छन्दसीत्यनेन सिद्धिरिति प्रश्नः । लोके नागमातुः संज्ञायां कद्रूरित्यादि न सिद्ध्येदित्युत्तरम् । एवं चेदं लौकिकार्थमित्याह छन्दोर्थमिति । युवतिरित्यत्र तद्धितान्तत्वेन प्रातिपदिकसंज्ञार्थं यूनस्तिरित्यस्याधिकारे पाठः सा च परिभाषयैव सिद्धेति किमर्थोऽधिकार इत्यत आहोत्तरार्थ इति । इह करणं परिभाषाया अनित्यताज्ञापनार्थमित्यन्ये । ननु टापः प्रागेवाविक्रियतां प्राचां ष्फो यस्येति चेत्यनयोः तद्धितेद्ग्रहणे च मास्ताम् । नैनत् पत्नीत्यादावोगुणप्रसङ्गात् । न चेद् ग्रहणमेव ङीपि तद्धितकार्याभावं ज्ञापयतीति नोक्तदोष इति वाच्यम् । कुरूरित्यादावतिप्रसंगात् । न च कुरूरित्यादिसिद्धये स्त्रीप्रत्ययेषु तद्धितकार्याभावाज्ञापकमीद्ग्रहणमिति चेत् । आसुरायणीत्यादौ ष्फोऽपि यस्येति लोपानापत्तेः । अत एव दंडिनीत्यादौ टिलोपो नेत्याहुः । ननु युवतीकरनिर्मितं दधीति कथं प्रयोगः । सर्वतोऽक्तिन्नर्थादिति गणसूत्रेण तिप्रत्ययेन यौतिऽपि स्त्रीत्वे द्योतकसमुच्चयस्यादौ पान्ङीप्प्रसिद्धेः बाहुलकात् यौतेरौणादिकेन कनिप्रत्ययेन सिद्धेश्च । आद्ये युवतीनां समूह इत्यर्थेऽणि मस्यादि इति पुंवद्भावे यौवनमिति

स्यादिष्यते तु यौवतमिति अन्त्येऽगतिकगतित्वं चेति मनसि निधायाह शत्रंतादिति । यौति मिश्रीकरोत्यात्मानं ययेत्यर्थे लटः शतृङीष् एवं च यौवतमुक्तरीत्या सिद्धं त्यंतात्तु यौवनमित्येव । न च भिक्षादिपाठसामर्थ्यान्नपुंवत्तत्पाठस्य भाष्यकृता प्रत्याख्यानादिति संक्षेपः ॥

इति स्त्रीप्रत्ययाः ।

# अथ विभक्त्यर्थाः ।

अथ स्वौजसित्यादिना विहितसुवामर्थविशेषव्यवस्थादर्शनाय कारकप्रकरणारंभः । तत्र जातिव्यक्तिलिंगसंख्याकारकेति पंचकं प्रातिपदिकार्थ इति भगवद्भाष्यकृत्कृतान्तः । तथा च द्व्येकयोरित्यादिना प्रातिपदिकार्थेति सूत्रस्यैकवाक्यतया लिंगग्रहणेन च सत्त्वाभिधायिन एव प्रातिपदिकार्थेत्यस्य संग्रहादव्ययात् प्रथमाया अनुत्पत्तावुच्चैरित्यादौ रुत्वं ग्राम उच्चैस्ते स्वमित्यत्र सपूर्वायाः प्रथमाया इति ते आदेशो न स्यादिति तदर्थं प्रातिपदिकार्थेत्यस्यावश्यकत्वात्ततश्च लिंगेत्यस्य गतार्थत्वाद्वैयर्थ्यमित्यतो विवक्षितमाह नियतेति । यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स तदर्थ इत्यर्थः । तटादिशब्दानां तत्तत्प्रत्ययसमभिहारे सकललिंगबोधकतया न किमपि लिंगं तेभ्यो नियतोपस्थितिकमिति न तद्बोध्यलिंगस्य प्रातिपदिकार्थेति संग्रह इति लिंगग्रहणमित्याशयः । नन्वेवं सिंहो माणवको गौर्वाहीक इत्यादौ सिंहादिसदृशरूपार्थस्य शक्यार्थरूपप्रातिपदिकार्थेत्यनेनासंग्रहात्प्रथमानुप-

पत्तीरिति चेन्न । शक्यार्थे पदं साधुत्वेनान्वाख्याय पश्चात्पदान्तर-समभिहारे तात्पर्यानुपपत्त्या लक्षणांगीकारेण लक्ष्यार्थबोधेन सर्व-सामंजस्यात् । न च विभक्तौ न लक्षणेति वादविवादः । एकविभक्ते-रपरविभक्तौ न लक्षणा व्यत्ययो बहुलमित्यनुशासनविरोधादि-त्याशयात् । लक्षणा तु शक्यतावच्छेदकारोप एव अतस्मिन् स इत्यारोपार्थकभाष्यस्वरसात्, आरोप्यते ताद्रूप्यं न तु मुख्यमिति कैयटोक्तेश्च । यथाह सिंहत्वादिरूपावच्छेदकस्यारोपो माणवकादौ ननु शक्यसम्बन्धो हि लक्षणा । अन्यथा शक्यादन्येन रूपेण ज्ञाते भवति लक्षणेत्यभियुक्तोक्तिर्विरुध्येति चेन्न । भाष्याद्यसंस्प-र्शात् । शक्यतावच्छेदकान्यरूपवत्त्वेन गृहीतेऽर्थे लक्षणा । शक्य-तावच्छेदकारोप इत्यर्थवर्णनेनाभियुक्तोक्तेर्मदुक्तलक्षणालक्षणपक्षपा-तित्वेनाविरोधाच्चेत्याधिकं नागेशीयचिंतामण्योः । ननु कर्मणि द्विती-येवेतीहार्थनियमात्प्रातिपदिकार्थादौ केवलप्रथमायाः पर्यवसानादव-धारणार्थकमात्रग्रहो व्यर्थ इत्याशंक्य सूत्रकृत्संमते कर्मण्येव द्वितीयेत्याकारकप्रत्ययनियमे कर्मादीनामनियमात्तेष्वपि प्रथमाति-प्रसङ्गभंगाय तद्ग्रहणमित्याशयेनाह मात्रशब्दस्येति । मात्रं कार्त्स्न्येऽवधारणे चेत्यमरादिहावधारणमर्थः द्वन्द्वोत्तरमस्वपदविग्रहे मयूरव्यंसकादित्वात्समासोऽवधेयः । प्रत्येकं योग इति । द्वन्द्वे इत-रेतरयोगसमाहारयोः समूहो विशेष्यो घटकपदार्थाविशेषणानीति समूहस्य चप्रशब्दैरेवाभिधानेनावयवानतिरेकेण भानाभावात्तत्रान्व-यिनेरावयवेऽप्यन्वयसंभवादित्यभिप्रायः । एतन्मूलकमेवोच्यते द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते इति उपपादयिष्यते चेदं

समासे । ननु वीरः पुरुष इत्यादौ विशेष्यविशेषणभावस्याधिकस्य भानात्कथं प्रथमा । न च पूर्वापरेति समासविधानात् ज्ञापकात्स्यादेव सा प्रथमा । द्वितीयाद्यन्ते तद्विधानस्य चारितार्थ्यादिति चेन्नैवम् । तस्य वाक्यार्थत्वेन वहिरङ्गत्वेन प्रथमप्रवृत्तसंस्कारबाधानुपपत्तेः । तदुक्तमत्रैव भाष्ये । यदत्राधिक्यं स वाक्यार्थ इति । निरुक्तप्रातिपदिकार्थस्वीकारात्फलितमाह अलिङ्गा इत्यादि । असत्त्वभूतत्वेन तत्र लिङ्गाद्ययोगादलिङ्गत्वव्यवहारादिति भावः । न चालिङ्गत्वे सदृशं त्रिषु लिङ्गेष्वित्याथर्वणप्रणवविद्यागतश्रुतिविरोधः । यथोपक्रमोपसंहाराभ्यामस्याः श्रुतेर्ब्रह्मपराया अप्यत्र भाष्यप्रामाण्यादुपसंहारस्तथा लिङ्गाद्यभावपरताया अपि सुलभत्वात् । आब्ग्रहणं व्यर्थमलिङ्गत्वादिति वार्तिकोक्तेश्च । न चाव्ययीभावस्य कथं लिङ्गयोगः वचनप्रामाण्यादिति दिक् । नियतलिङ्गा इति । नियमेन पुँल्लिङ्गाद्युपस्थापका इत्यर्थः । वासुदेवलक्ष्मीब्रह्मपराः कृष्णश्रीज्ञानशब्दा नियमेन पुंस्त्रीक्लीबानुपस्थापयन्तीति भावः । मात्रपदेन कर्माद्याधिक्ये प्रथमा न भवेदपितु लिङ्गपरिमाणग्रहणाल्लिङ्गाधिक्ये परिमाणाधिक्ये च स्यादेवेत्याशयेन लिङ्गमात्राधिक्ये इत्युक्तम् । यद्यपि लिङ्गादिमात्रे इत्येवाक्षरार्थस्तथापि प्रातिपदिकार्थं विना लिङ्गादिप्रतीतेरसंभवादाधिक्यग्रहणम् । अन्ये तु सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्तं तदाश्रयश्च गृह्यते । एवं चालिङ्गालिङ्गप्रवृत्तिनिमित्तकाश्चाव्ययपुम्शब्दादयः प्रातिपदिकार्थ इत्यस्योदाहरणम् । अन्ये सर्वं लिङ्गाधिक्योति सविस्तरं प्राहुः । ननु द्रोणादीनां

परिमाणमर्थ इति प्रातिपदिकार्थ इत्यनेन सिद्धांवतद्ग्रहो व्यर्थ इत्याशंक्य यदा मानमेयसम्बन्धात् व्रीह्यादौ द्रोणादयो वर्तन्ते तदाव्यभिचारान्नास्ति मेयस्य ततो नियतोपस्थितिरिति तेनागतार्थत्वमित्यभिप्रेत्य प्रयमार्थमाह परिमाणेति । एवं च मानमेव भावस्य संसर्गस्य विधया शाब्दबोधे मानार्थ प्रमेय एव द्रोणादीनामर्थः । अन्यथा नामार्थयोरभेदबोधस्य व्युत्पत्तिसिद्धत्वादभेदबोध एव स्यादिति भावः । तदेवोपपादयति द्रोणरूपमित्यादिना । द्रोणाभिन्नमित्यर्थः । ननु पाचक औपगव इत्यादौ पचनाश्रय उपगवपत्यसम्बन्धीत्यर्थन भाष्यादिसिद्धेन सर्वत्र भेदान्वय एव प्रकृतिप्रत्ययार्थयोरिति कथमुक्तार्थलाभ इत्याशंक्यामिक्षा देवतायुक्ता वदत्येवैष तद्धित इति मीमांसकनिकायेन देवतार्थकतद्धितादैन्द्रं हविरित्यादावैन्द्राभिन्नदेवताकं हविरिति बोधाभ्युपगमादिहाप्यदोषादित्यभिप्रेत्य विवेचयति प्रत्ययार्थ इत्यादि । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति व्युत्पत्तेरिति भावः । अभेदेन संसर्गेणेति । इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावेनेत्यर्थः । अभेदस्तु न संसर्ग इति नागेशीयाचिन्तामण्योर्विस्तरस्तत एवावसेयः । प्रत्ययार्थस्तु परिमाणं तु । परिच्छेद्यपरिच्छेदकभावेन प्रमेयमानसंबन्धेन । व्रीहौ, धान्यादौ । एवं च द्रोणाभिन्नपरिमाणनिष्ठपरिच्छेदकतानिरूपितपरिच्छेद्यताविशिष्टो व्रीहिरित्यर्थः । अन्ये तु तिङ्समानाधिकरणे प्रथमेति वार्तिकैकवाक्यतया परिमाणेत्यस्य परिमाणे वर्तमानात्प्रातिपदिकादित्येवार्थः । न च प्रातिपदिकार्थ-

त्वासिद्धिः । प्रवृत्तिनिमित्ततदाश्रयद्रव्ययोरेवात्र प्रातिपदिकार्थपदेन ग्रहणात् । द्रोणादिपदानां च द्रोणत्वाद्येव प्रवृत्तिनिमित्तम् । द्रोणः परिमाणमिति द्वौ ब्राह्मणावितिवत्प्रयोगः । द्रोणस्यानेकार्थत्वाद्वा । एवं च भेदान्वयेन राज्ञः पुरुषमानयेतिवद्द्रोणो व्रीहिमानयेत्यस्याप्यापत्तेः द्रोणो व्रीहिरिति प्रयोगस्तु गौर्वाहीक इत्यादिवल्लक्षणया साधु तस्मात्परिमाणस्योदाहरणं द्रोणः खारी आढकमिति भाष्योक्तमेव रमणीयमिति प्राहुः । ननु वचनशब्दो वाचकपर्यायः स च व्यर्थोऽर्थे शास्त्रीयकार्यासम्भवादिति संशय्य वाच्यवाचकयोरभेदाध्यवसायेन पूर्वाचार्यैः संख्यायां व्यवहृत इत्याशयेनाह वचनं संख्येति । उक्तार्थत्वादिति । उक्तार्थानामप्रयोग इति न्यायादिति भावः । अर्थप्रत्यायनाय लोके शब्दः प्रयुज्यते स चार्थो यद्यन्येन प्रतिपादितस्तदा प्रयोजनाभावाच्छब्दान्तरप्रयोगेण न भाव्यम् अक्षिनिकोचेनाप्यवगतेऽर्थे शब्दो न प्रयुज्यते किं पुनः शब्दान्तरेण प्रतिपादिते इत्यनभिहितसूत्रकैयटेन मूलमुपदर्शितम् । न्यायस्वीकारश्च भाष्येऽपीतिना प्रामाण्यमाशंक्यम् । अनभिहितसूत्रसत्त्वे तु तदधिकारात्परिगणनस्य भाष्ये प्रत्याख्यानात्सिद्धान्तपञ्चकपक्षे प्रातिपदिकेनाभिहित एकत्वादौ विभक्तेरप्राप्तिरिति भावः । ननु प्रातिपदिकत्वेनोक्तत्वं विभक्त्युत्पत्तौ न दूषकम्, अन्यथा पञ्चकपक्षे कर्मादौ द्वितीयाद्यनापत्तेरेवं चोक्तार्थत्वादित्यादिग्रन्थश्चिन्त्य इति चेन्न । भाष्यकैयटाद्यनवलोकनात् । यथोक्तमनभिहितसूत्रे अभिहिते प्रथमा न प्राप्नोति किं कारणं प्राति-

पदिकेनोक्ता एकत्वादय इत्याशंक्य वचनाद् भविष्यन्तीति । एवं च प्रातिपदिकार्थमात्रस्यान्यैरभिधानाभावेऽपि प्रातिपदिकेनाभिहितत्वस्याविनाभावादनभिहिताधिकारेऽपि सूत्रसामर्थ्यात्प्रथमा स्यादेव । तदप्युक्तं तत्रैव । न क्वचित् प्रातिपदिकेनानुक्तः प्रातिपदिकार्थ उच्यते च प्रथमा सा वचनाद्भविष्यतीति । द्वितीयादयस्तु कर्मादीनां विध्यन्तरैरप्यभिहितत्वसम्भवात् प्रातिपदिकेनाभिधानमनादृत्य विध्यन्तरानभिधाने एव स्युरधिकारसूत्रसत्त्वे प्रत्याख्यानेऽप्यनभिधाने सावकाशा अभिहिते न स्युरेवेति गूढाभिसन्धिः । अस्मादेव वक्ष्यति प्रातिपदिकार्थमात्रे प्रथमैवेति । तदेतत्सकलमभिप्रेत्याह वचनमिति । सूत्रे वचनग्रहणमित्यर्थः । न चैकादिशब्देभ्यः सर्वविभक्त्यापत्तिरिति वाच्यम् । अनान्वितार्थकविभक्त्यपेक्षयानुवादकविभक्तेरेव न्याय्यत्वात् । अत्राहुः । अर्थे प्रथमेत्येव सारमितरत्सर्वं त्यक्तुं शक्यम् । तद्यथा । अर्थे प्रथमेत्युक्ते कस्यार्थ इत्याकांक्षायां यस्मात्स्वादिविधिस्तस्येति लभ्यत एव । स्वादयश्च प्रादिपदिकाल्लिङ्गप्रत्ययविशिष्टाच्च विधीयन्ते तदर्थत्वं च ततो नियतोपस्थितिकत्वमेव । एवं च मृडानी हिमानीत्यादौ पुंयोगमहत्त्वादेरपि टचन्ताद् नियतभानेन प्रथमा सिध्यति । पश्चक्तपक्षस्य सिद्धान्तत्वेन लिङ्गमपि प्रातिपदिकार्थत्वात्तेनैवसिद्धेऽप्यर्थे इति । द्रोणो व्रीहिरित्यपि गौर्वाहीक इत्यादिवल्लक्ष्यार्थे साधयित्वा लक्षणीयार्थान्वयबोध इति परिमाणमपि व्यर्थं, न केवला प्रकृतिः प्रयोक्तव्येति समयादेव सिद्धौ वचनग्रहणमप्यपार्थकं मात्रग्रहणमपि व्यर्थम् । विशेषविहितैः कर्मणि द्वितीयेत्यादिभिर्बाधि-

तत्वेन कर्मादौ प्रथमाया अप्रवृत्तेः कर्मणि द्वितीयेत्यादिषु कर्मणि द्वितीयैव नान्या विभक्तिरित्येवमर्थस्य नियमस्वीकारात् । न च कर्मण्येव द्वितीयेत्यादिप्रत्ययनियमपक्षे कर्मादौ प्रथमा मात्रपदेनैव वारणीयेति वाच्यम् । तत्र पक्षे प्रातिपदिकार्थ एव प्रथमेति नियमपर्य्यवसानेन तद्वारणादिति । अत्र वदन्ति । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति न्यायेनैवार्थेऽपि तत्सिद्धौ सम्पूर्ण सूत्रं न कार्यमिति । इदं तु न सत् । अर्थनियममाश्रित्य मात्रग्रहणं सम्बोधने चेति सूत्रं लिङ्गादिग्रहणं प्रत्याख्यात्रा वार्तिककृता तद्धितश्चेति सूत्रे प्रातिपदिकग्रहणमनर्थयता भाष्यकृता च सह विरोधापत्तेः । अनभिहितसूत्रसार्थक्याय कर्तव्यः कट इत्यादौ तव मते प्रथमाविधायकात्पूर्वकर्तृकर्मणोरिति सूत्रस्य पाठेन परकृद्योगलक्षणषष्ठीमादायेति वदद्भिरनभिहितसूत्रे भाष्यकैयटतद्व्याख्यातृभिः सार्द्ध विरोधाच्च । एवं चार्थग्रहणस्य वितथत्वेऽपि प्रथमेत्येतावन्मात्रमेव सारमित्यालोचयाम इति न कश्चित् क्षुद्रोपद्रवः ॥ इति प्रथमा ॥ कर्तुः किमिति । कारक इत्यधिकारसूत्रे कारकशब्दः क्रियापरः करोति कर्तृकर्मव्यपदेशानिति व्युत्पत्तेः । आप्नोतेः सनन्तान्मतिबुद्धीति वर्तमाने कर्मणि क्तः तत्र केनाप्तुमित्यपेक्षायाऽवश्यं जायमानत्वेनाधिकारात् क्रिययेत्यर्थलाभेनैव सूत्रार्थोपपत्तौ नार्थस्तद्ग्रहणेनेति भट्टाराकूतम् । एवं सति क्रिययाऽऽप्तुमिष्यमाणमित्यर्थे फलाश्रयस्यापि फलनिष्ठजन्यतानिरूपितजनकतावच्छिन्नत्वसंसर्गेण तदाप्ततमेऽपि कर्मसंज्ञा स्यादित्याशयेनोत्तरयति माषेष्विति । माषेषु बुभुक्षया प्रसक्तमश्वं माषनाशो माभूदित्यन्यत्र

बध्नातीति तात्पर्यार्थः । माषेष्वित्यत्राधारसंज्ञायाः परत्वाद्बाधकं कर्मत्वं स्यादिति भावः । तदेवाह । कर्मण इति । वस्तुगत्या साक्षात्समवायसंबंधेन व्यापारस्य कर्तृनिष्ठत्वेन कर्त्रैष्यमाणे एव तत्सञ्ज्ञासंपत्तिर्भविष्यति । अत एव कर्तुरित्यस्य प्रश्नोत्तरभावो भाष्ये इति कर्तुरिति चिन्त्यप्रयोजनमित्याहुः । तमप्ग्रहणं किमिति । अवयवद्वारा समुदायस्य प्रश्नः । कर्तुरुद्देश्यं कर्मत्वे-वास्तामित्यभिप्रायः । पयसौदनमिति । इदं च प्रत्युदाहरणं तदानीं यदाकृतभोजनोऽपि पयोलाभेन भोजने प्रवर्तते । भोजनक्रियायाः पय उद्देश्यत्वात् । ईप्सिततमशब्दस्तु क्रियाशब्द एव नाभिप्रेतपर इति स्पष्टं वारणार्थानामित्यत्र भाष्यकैयटयोः । तथा च पयसस्तदा फला-श्रयत्वेनाविवक्षणान्न कर्मत्वमित्याशयः । तर्हि तमपः किं फलमिति वाच्यम् । कूपादंधं वारयत्यग्नेर्माणवकं वारयतीत्यादावंधमाण-वकयोः कर्मसंज्ञासंपत्तिरेव इतरथा वारणार्थेत्यपादानसंज्ञास्याऽ-पवादो भवेत् । न चाग्निकूपयोः सा सावकाशेति शंक्यम् । तयोरपि तदुपस्थाप्य संयोगरूपफलाश्रयत्वेन कर्मत्वस्यैव प्रवृत्तेः । वार-यतेश्च संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारोऽर्थः स एव प्रवृत्तिविघात उच्यते । न च संयोगो न तत्कर्तृव्यापारप्रयोज्य इति तत्र कर्मत्वाप्राप्तिः कर्तृव्यापारवाचकधातूपात्तफलाश्रयत्वस्यैव लाभात् । तस्मान्माणवकादेः कर्मत्वसंपादकं तमप्ग्रहणम् ईप्सि-तमाने सावकाशस्यापादानत्वस्येप्सिततमेऽनेन बाधनात् । तत्त्वं च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्दे-श्यत्वम् । तच्च नाग्निकूपादौ, केचित्तु ईप्सिततमस्यापीप्सित-

त्वादिति प्रश्नः। उत्तरे तु ओदन एवेप्सिततमो न तु पयः। नहि केवलपयःपानेन संतुष्टिः किंतु तत्संस्कृतेनौदनेन पयसस्तथात्वे तु भवत्येव पयः पिबतीति। यद्यपि इदं न सत्। वारणार्थसूत्रे स्वव्यापारजन्यफलाश्रयार्थकस्यैवेप्सितपदस्य भाष्यकृदुक्तेः अन्यथा कूपादंधं वारयतीत्यादौ कूपादेरीप्सितत्वाभावादपादानत्वानापत्तेः। तथापि वारणार्थसूत्रे क्रियाजन्यफलाश्रय एवार्थः। इह तु तमब्ग्रहणात्क्रियाजन्यफलाश्रयत्वेन कर्तुरिच्छाविषयत्वमिति भेदः। पयो हि फलाश्रयत्वेन कर्मण एवेच्छाविषयः। अत एव कर्मणो यदीप्सितं तदपादानमित्युक्तं भाष्ये इत्याहुः। ननु पूर्वप्रक्रान्तमेवाधिशीङ्स्थासां कर्मेति सूत्रे कर्मपदं तदेवानुवर्ततामित्याशंक्यमानं प्रत्याह कर्मेत्यनुवृत्ताविति। एकयोगनिर्दिष्टत्वेनाधारस्याप्यनुवृत्तावाधारस्यैव कर्मसंज्ञा स्यात्तन्निवृत्यर्थमिह कर्मपदमित्यर्थः। अयं भावः। आधारोऽधिकारणमित्यत्र कस्याधार इत्याकांक्षोदये कारकाधिकारात् क्रियाया एवेत्युपलब्धौ स्वतंत्रेप्सिततमपदाभ्यां साक्षात् क्रियाया आधारे कर्तृकर्मसंज्ञाविधानेन परंपरया तस्या आधार इत्यवस्थितौ योग्यतया कर्तृकर्मद्वारैव क्रियाश्रयस्याधिकरणसंज्ञा संपद्यते। एवं च कर्त्रा स्वनिष्ठव्यापारेणाप्तुमिष्यमाणस्तन्निष्ठक्रियायास्तद्द्वाराधारः कर्मत्वं प्रतिपद्येत। ततश्च यस्य धातोः फलं विषयतासंबंधेन विषये समवायसंबंधेन कर्तर्यपि तिष्ठति तस्यैव योगे तत्स्यादित्याशयेनाऽऽह गेहं प्रविशतीत्यत्रैवेति। इत्यादावेवेत्यर्थः। इहोक्तसम्बन्धाभ्यां गेहचैत्रयोः फलं तिष्ठतीति भावः। यद्वा फलसमानाधिकरणव्या-

परिवाचकत्वेनायमकर्मको धातुस्तथा चैतादृशयोग एव तत्स्यादि-त्याशय इति स्थितस्य गतिश्चिन्तनीया । वस्तुगत्या एवं सति कर्माधारयोः परस्परापेक्षत्वेन सूत्रद्वयवाक्यार्थानुत्पत्त्यैव नाधारानुवृत्तिः । अकर्मकधातुयोगे तत्करणे बहूपप्लवापत्तिश्च । अत एव कर्मानुवृत्त्यननुवृत्तिविधानाभावो भाष्ये इति सुधीभिर्विभावनीयम् । अथ पञ्चकं प्रातिपदिकार्थो विभक्तयश्च द्योतिका इति भाष्यसिद्धान्तः। द्योतकत्वं च समभिव्याहृतवृत्त्युद्बोधकत्वम् । भाष्ये कर्मादीनां विभक्त्यर्थत्वव्यवहारोऽपि द्योत्यतयैव । अत एव द्व्येकयोरित्यादीनां नियमत्वं बहुष्विति सूत्रे भाष्याद्युक्तं संगच्छते । एवं भावकारककालसंख्याश्चत्वारो धातोर्वाऽर्थास्तिङश्च द्योतकाः । अत एव प्रकृत्यर्थविशेष्यको बोध उभयत्रेत्याद्यस्मत्कृतचिन्तामणौ नागेशीये चोपपत्तिविस्तरः । अनभिहित इत्येतदभावे स्वादिसूत्रेणानिर्दिष्टार्था इति न्यायेन कर्मादौ संख्यायां च स्वादिना सिद्धे नियमत्वोपपत्तिः । तत्र यदा कर्मणीत्यादेर्द्व्येकयोरित्यादेश्चैकवाक्यतायामेकस्मिन् कर्मणीत्यन्वयेन सूत्रजनितबोधे कर्माद्यर्थप्राधान्यं तदा सूत्रजनितबोधविषयप्रधानविषयेणोक्तार्थानामप्रयोग इति न्यायेनैव सिद्धेरनभिहितसूत्रं न कार्यम् । यदा तु कर्मगते एकत्वे इत्यन्वयेन संख्यायाः प्राधान्यं तदा कार्यमेव तत् । तथा चानुक्त एव विभक्तिरित्यभिप्रायेणाह । अभिहिते त्विति । प्रथमैवेति । अनभिहिताधिकारेऽपि प्रातिपदिकार्थस्य प्रातिपदिकेनोक्तत्वेऽपि सूत्रसामर्थ्यात्सा भवत्येवेति भावः । अत एवाभिहिते प्रथमेति वार्तिकं संगच्छते । इहत्याभिसंधिः प्रागप्युक्तः ।

क्रियाद्भिरभिधानं भवतीत्यपेक्षायामाह प्रायेण तिङित्यादि । अत एव कटं भीष्मं कुर्वित्यादौ विशेष्यपदोत्तरोत्पन्नद्वितीयया विशेषणगतकर्मत्वोक्तेऽपि विशेषणादपि संपद्यते द्वितीया । यदा तु प्रक्रियादशायां कटोऽपि कर्म भीष्मादयोऽपि कर्माति स्वीकारात्कटत्वविशिष्टकटनिष्ठकर्मत्वोक्तावपि भीष्मत्वगुणविशिष्टनिष्ठकर्मत्वस्य बोधनाय विशेषणादपि सा तदा परिगणनं प्रत्याचख्युर्भाष्यकाराः । तिङ्कृतौ स्वप्रकृत्यर्थं प्रति यस्य कर्मत्वं तस्य सर्वस्यापि कर्मत्वमभिधत्त इति न कृतः कटः सुन्दर इत्यादौ द्वितीयेत्यादिकं नागेशीयचिन्तामण्योरवसेयम् । लः कर्मणि तिप्तस्झीत्यनयोरेकवाक्यतया तिङापि कर्मणोऽभिधानमित्यभिप्रेत्याह हरिः सेव्यत इति । प्रीत्यनुकूलव्यापारो भजेः सेवेश्चार्थः । कर्त्रादयस्तिङो द्योत्यार्थाः । तेषां विशेषणत्वं प्रकृत्यर्थस्य विशेष्यत्वम् । कर्तृलकारे व्यापारो विशेष्यः । कर्मलकारे फलं विशेष्यम् । एवं च चैत्रकर्तृको वर्तमानकालिको हरिकर्मक एको व्यापारः । चैत्रकर्तृकवर्तमानव्यापारजन्या हरिनिष्ठा एका प्रीतिरिति शाब्दबोधः । उपपत्तिस्तु चिन्तामणौ बोध्या । तेन क्रीतमित्यधिकारे शताच्च ठन् यताविति यता कर्मणोऽभिधानमाह । शत्य इति । शतेन क्रीतोऽश्वः शत्यः शतिकः । भाष्ये प्रायेणेत्यदृष्टमपि प्राच्यानुरोधेन यदुक्तं तस्य फलमाह । क्वचिन्निपातेनेति । वस्तुगत्यात्र पक्षे तुमुनः साधुत्वायेष्यते इत्यस्याध्याहारश्चावश्यकः । अन्यथा क्रियाया उपपदत्वाभावेन तुमुन्ण्वुलाविति सूत्राप्रवृत्तेः । एवं च तिङैवाभिधानम् । तथाच विषवृक्षोऽपि संवर्द्ध्य छेत्तुं यदिष्यते

तदसंमतमन्याय्यमित्यर्थः । तादृशेच्छाया अन्याय्यत्वं च तद्वि-
पयस्यान्याय्यत्वेन ज्ञेयम् । युक्तं चैतत् । इतरथा प्रथमाया
अपि कारकविभक्तित्वेन क्रियामंतरानुत्पत्तिः स्यात् प्रथमान्तकार-
कस्य क्रियायामन्वयनियमेन प्राच्यनयेऽसंगतिश्च । अमुं नारद
इत्यबोधि स इत्यादौ नारद इतीति श्रीकृष्णीयज्ञानानुकरणं प्रथ-
मान्तस्य वा प्रातिपदिकत्वान्न द्वितीया नारद इत्येतच्छब्दाभिल-
प्यमानाकारो बोध इति तदर्थः । एवं सर्वत्र बोध्यम् । मातेव
हितकारिणीमिति त्वऽसाध्वेवेति चिन्तामणौ विस्तरः । विभागानु-
कूलव्यापारानुकूलव्यापारो दुहादेरर्थं इत्यभ्युपगमात् गां पयो दो-
ग्धीत्यादौ गोः पयस्त्यजति गवा पयस्त्याजयतीत्याद्यर्थप्रतीत्या
कर्तुरित्येव कर्मत्वे सिद्धे व्यर्थमकथितं चेति सूत्रं तथापि यदा
पयोनिष्ठविभागानुकूलव्यापारादेरेव तद्धात्वर्थस्तदापादानत्वाद्यवि-
वक्षायामन्येनासिद्धकर्मत्वप्रतिपत्तये तदावश्यकम् । तत्र नटस्य
शृणोतीत्यादौ नटस्यापि कर्मत्वे प्राप्ते गानद्वारा श्रवणक्रियाजनक-
स्वरूपकारकत्वसत्त्वात् । न च कर्मयुक्त्वं धात्वर्थव्यापारात् प्राक्
तदनंतरं वा तत्संबद्धत्वम् । तत्र सति संभवे प्राक् संबद्धत्व-
मेव ग्राह्यमत एव गां पयो दोग्धि स्थाल्यामित्यादौ स्थाल्यादेर्न
दोषस्तथा च कर्मयुक्त्वाभावादेव न तत्र दोष इति वाच्यम् ।
तदंशस्यापि परिगणनलभ्यत्वात् । अतः परिगणनमुक्तम् । एवं
च तद्राजसूत्रे पृच्छिपर्यायस्य चुदेर्द्विकर्मकत्वसमर्पकमहमपीदं
चोद्यं चोद्य इति भाष्यप्रयोगमसमंजसं मन्वान आह । अर्थनि-
बंधनेति । परिगणितत्वेऽपि न स्वरूपाश्रयेति भावः । इदं कैयटा-

नुरोधेन। वस्तुगत्या तथा सत्याख्यातोपयोग इत्यत्र भाष्योक्त- परिगणनत्वं भज्येत । दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना इति हि भाष्योक्तार्थकया चिग्रहणेनैव सिद्धे भिक्षिग्रहणं व्यर्थं च स्यात्। प्रागुक्तभाष्यप्रयुक्तचुदेरन्येषां च येषां द्विकर्मकत्वमिष्टं तेषां व्यापारद्वयार्थकत्वेन कर्तुरित्यनेनैव सिद्धमित्यधिकं नागे- शीये। कारकं किमिति । एतदभावे कर्मयुक्ते माणवकेऽपि तत्स्यात्। तस्यापि परंपरया योगात् तद्वारणाय तद्ग्रहणे कृतेऽपि क्रियान्वयित्वरूपस्य तस्य परंपरया आधारसंज्ञायामवश्यं स्वीकर्त- व्यायां माणवकेऽपि सत्त्वेन न तद्दोपनिर्मुक्तिः। एवं च प्रश्नानुप- पत्तौ जिज्ञासायामत्र किम्शब्दः कारकमित्यस्य कोऽर्थ इति भावः। जिज्ञासितं च प्रत्युदाहरणमुखेन दर्शयति माणवकस्येति। करोति क्रियां निर्वर्तयतीति व्युत्पत्तिप्रदर्शकभाष्येण क्रियाजनकमिति तदर्थः। जनकत्वं चान्यथा सिद्धिशून्यत्वे सति नियतपूर्ववर्तित्व- मिति माणवके न दोषः। प्रश्नरूपकार्यस्य तत्पित्राऽन्यथासिद्धेः माणवकसंबंधिपितृकर्मकपाथिकर्मकप्रश्नानुकूलो व्यापार इत्यादिकं चिन्तामणौ विस्तरस्तत एवावगंतव्यः। गतीत्यादि किमिति। अन्यानधीनत्वरूपप्रधानत्वस्य प्रयोजकव्यापारे सत्त्वेन तदनुरो- धिकर्मत्वस्यान्तरङ्गादपि कर्तृत्वाद्बलवत्त्वेन कर्तुरीप्सिततममित्यनेनैव कर्मत्वं सिध्यतीति प्रष्टुर्भावः। एवं सिद्धे णिजर्थे- नाप्यमाणस्य चेद् भवति तर्हि गत्यर्थादीनामेवेति नियमार्थं तत्सूत्रमित्याशयेनोत्तरयाति। पाचयतीति। एवं च शत्रूनित्यादौ शत्रवः स्वर्गमगच्छन् तान् श्रीहरिः प्रेरयाति शत्रू-

येऽनुत्पन्ने णिचि कर्तारः उत्पन्ने णिचि कर्माऽभवन् । स्वर्गकर्मक-गमनानुकूलशत्रुकर्मकव्यापारानुकूलो हरिनिष्ठो व्यापार इत्यादि-बोधः । इह तु ओदनकर्मकपचनानुकूलदेवदत्तकर्तृकव्यापारानुकूल-यज्ञदत्तनिष्ठो व्यापार इत्यादि बोधः । गत्यादियोगे प्रयोज्यस्य कर्मत्वशक्तिमत्तया तदतिरिक्तधातुयोगे प्रयोज्यस्य कर्तृत्वशक्तिम-त्तया बोधादित्येवं सर्वत्र बोध्यम् । स्पष्टं चेदं हेतुमति चेत्यत्र फाणिभाष्ये । ननु गतिबुद्धीत्यत्र बोधनं बुद्धिर्ज्ञानमित्यर्थस्य दृशा-दावपि पश्यार्थैश्चेत्यत्र प्रसिद्धत्वेन सत्त्वाद्बुध्यर्थत्वेन सिद्धे दृशेश्चेति वार्तिकं व्यर्थमित्यत आह । सूत्रे ज्ञानसामान्येति । अयं भावः । ज्ञानं द्विधा जन्यते । केवलान्तःकरणेन अन्तःकरणानुसन्धान-सहायचक्षुरादीन्द्रियपञ्चकेन च । आद्यं सकलविषयत्वात् व्याप-कत्वेन सामान्यं व्यपदिश्यते अन्त्यम् प्रत्येकं रूपादिविषयकत्वात् व्याप्यत्वेन विशेष इति । अनेनेति । वार्तिकारंभेणेत्यर्थः । ज्ञान-फलमाह स्मरतीति । ननु शब्दं करोतीत्यर्थे शब्दवैरेतिक्यङन्ताद् णिचि शब्दायतेर्गतीत्यादिसूत्रेण प्राप्तौ वार्तिकं विफलमित्यत आह धात्वर्थेत्यादि । धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेत्याभियुक्तोक्तेः । शब्दरूप-कर्मणो धातुना क्रोडीकृतत्वादिति भावः । एवं चाकर्मकत्वप्रयु-क्तस्यापि कर्मत्वस्य प्रतिषेधार्थशब्दायतेर्नेति वार्तिकमिति कैयटा-दयः । अन्ये तु शब्दरूपकर्मणो धात्वर्थसंगृहीतत्वेऽपि बहिर्भूत-पुत्रादिकर्मणोऽप्रामाप्तौ मानाभावः । अत एव शब्दकर्मेत्यत्य शब्दक्रियाणामिति पक्षे ह्वयतिक्रंदयतिशब्दायतीनां प्रतिषेध

उक्तो भाष्ये न तु शब्दकर्मणामिति पक्षेऽपि कैयटादिमते त्वक-र्मकत्वेन पक्षद्वये प्रतिषेधस्यावश्यकत्वेनैकपक्षे प्रतिषेधं विदधतो भाष्यस्यासंगतिः । एवञ्च सकर्मत्वाद्गतीत्यादेरप्राप्त्या शब्दायतेर्नेति प्रतिषेधश्चिन्त्य इत्याहुः । गतीत्यादीति सूत्रं नियमस्य सजा-तीयापेक्षत्वात्सकर्मकाणां चेत्तेषामेवेति नियमपरम् एवं सिद्धेऽ-कर्मकग्रहणं सामर्थ्याद् देशकालादिभिन्नकर्माभावतो ग्रहणार्थ-मित्याशयेनाह । येषामिति । देशकालादीत्यादिनाभावाऽध्वनोः संग्रहः । अत्रेति । अत्रैव सूत्रे इत्यर्थः । इह शास्त्रे सर्वत्राविद्यमान-कर्मकाणामेवाकर्मकपदेन ग्रहणमिति कैयटोक्तं तु न युक्तम् । कृतपूर्वीकटमित्यादौ कर्मणोऽविवक्षया भावे क्तस्य भाष्यकैयटा-दावुक्तत्वात् । अधीगर्थेति सूत्रे कर्मणः शेषत्वविवक्षयाऽकर्मकत्वे मातुः स्मर्यते इत्यत्र भावे लकारस्य महाभाष्ये उदाहृतत्वाच्चेति दिक् । नत्वविवक्षितेति । अत एव नहि कश्चिदपि कालभावा-ध्वभिरकर्मकः सम्भवतीति सामर्थ्यात्तद्भिन्नकर्माभाववतो ग्रहण-मित्युक्तम् गतिबुद्धीत्यत्र भाष्ये यदि ह्यत्राविवक्षितकर्मकाणां ग्रहणं स्यात्तदा क्रियामात्रविवक्षायां कालादीनामविवक्षितत्वात्तैरप्यकर्मकत्वं संभवत्येवेति भाष्यस्यासंगतिः स्पष्टैवेत्याधिकं नागेशीये । ननु अल्पाच्तरत्वेन पूर्वनिपाते कर्त्तव्ये तदकरणेनाभिनीत्येतादृ-शानुपूर्विकसमुदायस्य ग्रहणात् निविशते यदि शूकाशिखापदे सृजति सा कियतीमिव न व्यथामिति नैषधीयपद्यस्य निष्प्रत्यूह-त्वेऽपि पापेऽभिनिवेश इत्यत्रापि कमत्वं दुर्निवारमित्यत आह परिक्रमेण इत्यादि । अन्यतरस्यामितीदमखंडमव्ययं विकल्पार्थं-

समर्पकं विकल्पेऽशद्वयं निषेधो विधिश्च। अत्रानुवृत्तिसामर्थ्याद् निषेध एवाश्रीयत इत्युपपादयितुमाह। व्यवस्थितेति। विशेषोऽवस्थिता निषेधरूपेत्यर्थः। फलितमाह कचिन्नेति। अत्र बीजं तु एष्वर्थेष्वभिनिविष्टानामिति समर्थसूत्रभाष्यप्रयोग एव। अन्ये तु उक्तभाष्यप्रयोगादभिनिविश् इत्यानुपूर्व्या अविकृताया एव। यत्र श्रवणं तत्रैवैतत्सूत्रप्रवृत्तिः। तथा च मण्डूकप्लुतौ व्यवस्थिताश्रयणे च न मानमित्याहुः। वस्तुगत्या तत्रानुपूर्वी सूत्रगता सविसर्गा धातुगता हलन्ता प्रयोगगताऽदन्ता इति नैकविधा चेत्यानुपूर्व्या भेदेनाविकृतेति कस्य विशेषणमित्यव्यवस्थितेयत्नान्तरमेवाश्रयणीयं किञ्चैतत् सूत्रं प्रति षत्वविधेरसिद्धत्वादविकृतैवास्यानुपूर्वीत्यपि सुवचोमिति मूलकृतोऽभिप्राय इति वदन्ति। जपमनु प्रावर्षदित्यत्र लक्षणं जपः तज्ज्ञानेन हि कालविशेषविशिष्टा वृष्टिर्ज्ञाप्यते। लक्षणत्वं च ज्ञानजनकज्ञानविषयत्वं तच्चानुना द्योत्यं, द्वितीयार्थश्च लक्ष्यलक्षणभावसम्बन्धः एवं च जपाभिन्नहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोधस्तथा चास्यापि हेत्वर्थे प्रवृत्तिरित्यभिप्रायेणाह परापीति। अयमाशयः। हेतुत्वाविवक्षणे लक्षणे कर्मप्रवचनीयसंज्ञायाः वृक्षमनु विद्योतते विद्युदित्यत्रावकाशः। हेताविति तृतीयायास्तु धनेन कुलमित्यत्र। प्रकृते हेत्वविवक्षायां विप्रतिषेधशास्त्रमहिम्ना तृतीयैव प्राप्तेति। बाध्यते इति। न चेह निशम्येत्यध्याहृत्य कर्मणि द्वितीयास्तु। उपपदविभक्तेरित्यनेन हेतुतृतीया निवारिता। अनोः कर्मप्रवचनीयसंज्ञया गति-

संज्ञाबाधनाद्गतिर्गताविति निघातो निवर्तितः । कर्मप्रवचनीययुक्त इति द्वितीया वृक्षं प्रति विद्योतते विद्युदित्यादौ चरितार्थेति स्पष्टं कैयटे, एवं च बाध्यते इति रिक्तं वच इति शक्यम् । अनुना जपस्यासंबन्धादुक्तबोधानापत्तेः । पुनः संज्ञेति । ननु च सजातीयस्थले बाध्यबाधकभावो दृष्टः विजातीयत्वात्संज्ञया विभक्तिबाधोऽशक्यः कर्तुमिति वाच्यं, पुनः संज्ञाकरणबोधितपुनर्द्वितीयाविधानसामर्थ्यादिति विवक्षितार्थत्वात् । नन्विह तृतीयार्थ इत्यनेन सिद्धेऽनुर्लक्षणे इति व्यर्थमिति चेन्न द्वयोर्विषयभेदात् । तत्र हि तृतीयापदेन तन्निमित्तशब्दः सहयुक्त इत्यत्रोपात्तोऽनंतरत्वात्सहशब्दो लक्षितस्तदर्थे साहित्ये द्योत्ये इत्यर्थोऽत एव नद्या सहेत्यर्थं समनंतरं वक्ष्यति । क्रीडोनुसंपरिभ्यश्चेत्यत्र प्रथमे कैयटे स्पष्टश्चायमर्थः । एतेन न चेह तृतीयार्थ इति सूत्रेण गतार्थत्वं शंक्यं पुरस्तादिति न्यायेन सहयुक्ते इत्येतन्मात्रबाधकत्वादिति मंदोक्तमपास्तम् । अपिः पदार्थेत्यत्र पदस्याप्रयुज्यमानपदांतरस्यार्थः पदार्थस्तत्र बिंदुरित्यादेः पदस्यार्थोऽपि द्योत्यः । एवं च सर्पिषोऽपि स्यादित्यस्य सर्पिषो बिंदुरपि स्यादित्यर्थः । तादृशोत्प्रेक्षामभिव्यंजयितुमाह । संभावनायां लिङिति । उपसंवादाशंकयोश्चेति सूत्रे भाष्यपठितेनोपसंवादाशंकयोर्लिङिति वार्तिकेनेति भावः । सूत्रमिदं यद्यपि छांदसं तथापि वार्तिकं लोकवेदसाधारणमिति तत्रैव स्पष्टं भाष्ये । न चाशंकानामोत्प्रेक्षा, ततश्च कथमुक्तार्थेऽपि वार्तिकप्राप्तिः । संभावनाया अप्युत्कटकोटिकाशंकारूपत्वात् । नन्वेवं बिंद्वादिपदार्थ एव यद्यपेर्द्योत्यस्तर्हि

स्यादित्येतत्पदवाच्यक्रियया संबंधाभावेनायोगात् षत्वादेरप्रसक्तौ गत्युपसर्गसंज्ञयोर्बाधे. फलाभावादलमपेः कर्मप्रवचनीयसंज्ञाभिनिवेशक्लेशेनेत्याशंक्याह तस्या एवेति । संभावनाया एवेत्यर्थः । तथा च बिंदोस्तद्दौर्लभ्यप्रयुक्तदौर्लभ्यसंबन्धस्य च संभावनाभिव्यंजितस्यापेर्द्योत्यत्वात्तत्संबंधेन स्यादित्यनेनान्वयान्नोक्तदोष इति भावः । विषयभूते भवने इति । धातुना लिङा च भावनैवोपस्थाप्यते । आद्या आर्थी भावना, अंत्या तु शब्दरूपत्वाच्छाब्दीत्युद्घोषः । तत्र धात्वर्थभावनायाः प्राधान्यं तयोः संबन्धो विषयविषयिभावरूपः । एवं च पचेदित्यादौ प्रेरणाविषयः पचनमितिवदत्रापि लिङर्थसंभावनाया विषयो भवनरूपो धात्वर्थ इत्याशय इत्यन्यत्र विस्तरः । मदुक्तामेव गतिमाह । कर्तृदौर्लभ्येति । कर्तुर्बिंदोर्दौर्लभ्यं तेन प्रयुक्तं दौर्लभ्यं तेन तद्रूपसंबंधेन भवनक्रियायां स्यात्पदवाच्यायामपि द्योत्यबिंदोः कर्तृतया तद्द्योत्योक्तसंबन्धेन चान्वयादितिभावस्तदाह अपिशब्दबलेनेत्यादि । पदार्थद्योतकता नाम । अप्रयुज्यमानबिंदुरूपपदांतरार्थद्योतकता नाम । ननु कर्मप्रवचनीयद्योत्येऽर्थे सर्पिषोऽन्वयेन तस्य कर्मप्रवचनीययुक्तत्वात् द्वितीया स्यादत आह नेहेति । न त्वपिनेति । बिंदुना तद्योगेऽप्यपि द्योत्यसंबंधेनानन्वय इत्यर्थः ।। कर्मप्रवचनीयद्योत्यसंबंधप्रतियोगित्वमेव कर्मप्रवचनीययुक्तत्वं प्रकृते चापि द्योत्यस्योक्तसंबंधस्य बिंदुः प्रतियोगी न तु सर्पिरिति भावः । यदा तु स्पष्टप्रतिपत्तयेऽपि द्योत्यस्यापि बिंदोः प्रयोगस्तदापि द्वितीयां बाधित्वोपपद-

विभक्तेरिति प्रथमैव शाब्दबोधस्तु सर्पिरवयवाविंदुदौर्लभ्यप्रयुक्तदौर्लभ्यवती विंदुकर्तृका संभावनाविषया सत्तेति । तमब्ग्रहणं किमिति । रामेण बाणेनेत्यादौ बाणः स्वगताक्रियया प्राणवियोगादिसिद्धौ प्रकृष्ट उपकारकः प्रकर्षस्तु यद्व्यापारानन्तरमव्यवधानेन फलोत्पादस्तद्रूपः रामश्च कर्त्ता स च कर्तृप्रत्ययसमभिहारे प्रधानीभूतधात्वर्थाश्रय इति नागेशीयाचिन्तामण्योरुपपत्तिविस्तरः । एवं च कारकाधिकारात्करणल्युडंतकरणेति महासंज्ञया च साधकत्वे लब्धे साधकग्रहणमेव साधकतमार्थं भविष्यतीति,प्रभुराकूतं, गंगायां घोष इति । आधार इति । सूत्रेऽप्येवंरीत्याधिकरणमित्याधिकरणल्युडंतमहासंज्ञयैव सिद्धे आधारग्रहणसामर्थ्यात्सर्वावयवव्याप्त्या य आधारः सोऽधिकरणसंज्ञः स्यात् तथा चेदं सूत्रं तिलेषु तैलं दध्नि सर्पिरित्यादावेव प्रवर्तेत गंगायामित्यत्र नैव स्यात् संज्ञा, नहि सर्वावयवैर्गंगाव्याप्त्या तीरं वा, तीरधर्मस्य घोषाधारत्वस्यात्यंतसामीप्यात्प्रवाहेऽत्रारोपो बोध्यः शक्यतावच्छेदकारोप एव लक्षणा चतुर्भिः प्रकारैरेतस्मिन् स इत्येतद्भवति ताद्धर्म्यात्सामीप्यात्साहचर्यात् तात्स्थ्यादिति सूत्रे चतुर्विधस्यैव संबंधस्य लक्षणानियामकत्वोक्तेः उदाहरणानि तु गौर्वाहीको गंगायां घोषो यष्टीः प्रवेशय मंचाः क्रोशंतीति यथासंख्यं वेदितव्यानीत्यन्यत्र विस्तरः । तथा चातिरिच्यमानं तमब्ग्रहणमस्मिन् कारके प्रकरणे प्रकारार्थबोधकपदं विनाशब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते इति ज्ञापयति तेन गौणाधारस्यापि संज्ञा सिध्यति । एवं गंगायां गाव इत्यादिकमुदाहरणम् । सर्वा-

वयवव्याप्त्यभावेन मुख्याधारत्वाभावादिदं सर्वं स्पष्टं प्रकृतसूत्रे फणि-
भाष्ये । अन्ये तु तदाक्षेपकरणासमर्थं प्रति आधारादिपदं चरि-
तार्थम् आध्रियतेऽस्मिन्नित्याधार इत्येतदर्थमाधारपदमित्याहुः
प्रकृतसूत्रस्वरितसूत्रस्थभाष्यपक्षयोरेकतरपक्षस्वीकारेऽपरोपमर्दस्या-
वश्यकत्वेनोपस्थितत्वात् प्रकृतसूत्रस्थ एव ज्यायानिति मूलकाराशयं
वर्णयन्ति । साधकपदमप्यव्यवहितफलोत्पादकलाभार्थं-
मावश्यकम्, एवं चाधारादिपदे स्वरितत्वप्रतिज्ञयाधिकः कारोऽ-
धिकारः अधिकार्यमिति तदर्थः तेन गौणाधारस्यापि ग्रहणं तथा
च व्यवधानेन फलोत्पादके करणत्वोपचारेण तृतीयांतप्रयोगस्या-
साधुत्वबोधनं तमप्फलम् । एतेन तमपा गौणमुख्यन्यायाप्रवृत्तिः
कारकप्रकरणे बोध्यते इति परास्तं स्पष्टं चेदं स्वरितेनेत्यत्र महा-
भाष्ये । सहयुक्त इत्यत्र पृथग्विनानानाभिरितिवत्सहेनेति वाच्ये
युक्तग्रहणं शब्दविशेषानादरेणार्थयोगे भवत्वित्यर्थमत एवोक्तमेव
साकं सार्द्धमिति । अत एव क्वचिच्छब्दयोगं विनापि भवतीति
तदाह विनापीति । न्यायसिद्धेऽर्थे लिंगमप्याह वृद्ध इति । सहार्थः
साहित्यं समभिव्याहृतक्रियादिसमानकालिकतत्क्रियादिमत्त्वम्,
अस्ति चेदं पुत्रेण सहेत्यादौ । न च माषवापोत्तरं तत्रैव क्षेत्रे
तिलवापे तिलैः सह माषान् वपतीत्यत्र दोषः समानेत्येतदग्रे
देशेत्यस्यापि निवेशात् । ननु पुत्रेणेत्यत्रागमनक्रियाकर्तृत्वादेव
तृतीया सिद्धा सत्यं, पुत्रेण सह स्थूल इत्यस्यैव मुख्योदाहरण-
त्वात् । न चाप्रधानग्रहणं प्रत्याख्यातं ततश्च स्थूलादेरपि तृती-
यापत्तिः । उपपदविभक्तेरिति न्यायेन प्रथमाया एव बलीयस्त्वादि-

त्युक्तं भाष्ये । एवञ्च प्रथमाया अपि कारकविभक्तित्वमिति स्पष्टमेव भाष्ये उक्तं, कारकविभक्तित्वं च क्रियाजनकत्वार्थकविभक्तित्वम् एतेन प्रथमायास्तन्नास्तीति नव्योक्तमपास्तम् । अधिकं चिन्तामणेरवसेयं, हेताविति सूत्रेण न शब्दस्वरूपं गृह्यते, सप्तमीनिर्देशात् । निमित्तकारणेति सिद्धेश्च स च लौकिकः फलसाधनीभूतो गृह्यते न तु तत्प्रयोजको हेतुश्चेति परिभाषितः । तस्मात्कर्तृत्वादेव तृतीयासिद्धेः । ननु लौकिकहेतोरपि तृतीयाकरणत्वादेवोपपद्यतेऽतो हेतुकरणयोर्भेदमाह द्रव्यादीति । आदिना गुणक्रिये, हेतुः क्रियान्वय्यपि द्रव्यगुणयोरप्यन्वयस्तस्येत्याह । साधारणमिति । करणं तु क्रियामात्रजनकमिति भावः । वैषम्यान्तरमप्याह निर्व्यापारेति । व्यापाररहितमित्यर्थः । करणं तु व्यापारवदेवेति भावः । एवञ्च प्रतियोगित्वात् ततः करणत्वस्य वैलक्षण्योपलब्धावपि स्फुटप्रतिपत्तये पुनराह । करणं त्विति । दंडेनेति । दंडनिष्ठजनकतानिरूपितजन्यताश्रयो घटः निरूप्यनिरूपकभावसंसर्गः पुण्येनेति । पुण्यहेतुकदर्शनाश्रयो हरिरित्यर्थः । अत्र दंडे व्यापारसत्त्वेऽपि क्रियाजनकत्वाभावान्न करणत्वं पुण्ये क्रियाजनकत्वेऽपि व्यापाररहितत्वान्न करणत्वम् । नन्वलं श्रमेणेत्यादौ क्रियावाचकपदाभावादप्रतीतेः क्रियायाः कथमत्र करणसंज्ञेत्यत आह गम्यमानापीति । न तु श्रूयमाणैवेत्याशयः । प्रविश पिंडीमितिवाक्यार्थे वाक्यैकदेशप्रयोग इत्यादिना स्पष्टमिग्यण इत्यत्र भाष्ये । अलमिति निषेधार्थकं तदाह । साध्यं नास्तीति । साध्यमित्यस्य नामत्वेऽपि प्रकृतिभागस्य क्रियात्वादस्ति क्रियायोगः । अत एव काष्ठैः पाक इत्यादि संगच्छते

इत्याह । इह साधनेनेति । ननु रुच्यभिलषयोरेकार्थत्वादर्थ-ग्रहणसामर्थ्यात्परामपि कर्मसंज्ञां बाधित्वा हरिर्भक्तिमभिलष्यती-त्यत्रापि संप्रदानसंज्ञा स्यादित्याशंक्यानयोर्भेदमाह । अन्यक-र्तृक इति । अभिलष्यति कर्त्रपेक्षया यदन्यदभिलष्यति कर्म तत्कर्तृक इत्यर्थः । हरिर्भक्तिमभिलष्यतीत्यत्र भक्तिविषयक इच्छादिरूपो व्यापारोऽर्थः । हरये रोचते इत्यत्र तु हरिनिष्ठप्री-त्यनुकूलव्यापारोऽर्थ इति तयोरर्थभेदान्नोक्तो दोष इति भावः । तदाह हरिनिष्ठेति, प्रीयमाणः किमिति, एतदभावे रुच्यर्थानां प्रयोगे कारकं संप्रदानं स्यादिति सूत्रार्थे जायमानेऽपि शेषत्वविवक्षायामस्य चारितार्थ्येन परत्वादधिकरणसंज्ञयैव भाव्यम्, एवञ्च पयो न दोष इति शंकितुर्भावः । शेषत्वविवक्षया चरितार्थत्वं नापवादत्वनिवार-कमन्यथा सकलकारकप्रकरणे यथासम्भवमपवादत्वप्रतिपादकपरा आकरग्रन्था उच्छिद्येरन् किंतु कारकत्वविवक्षायामेव । तत्रात्र नास्तीत्यपवादत्वात्पयोऽपि संप्रदानत्वं स्यादित्यभिप्रयन्नाह । पयोति । एतेनाधिकरणसंज्ञायां न दोषः प्रीयमाणपदं तु परत्वा-त्कर्मत्वेन देवदत्तं रोचते इत्येतन्निवृत्त्यर्थमित्युक्तिश्चिन्त्या । एवं श्लाघह्नुङ्स्थाशपां धारेरुत्तमर्णः स्पृहेरीप्सित इत्येतेषां शंकोत्तराशयौ वेदितव्याविन-त्याहुः । नन्वीप्सितशब्दः क्रियापरो नाभिप्रेतपरस्तथा च तमपमन्तरेणेप्सिते एव च संज्ञास्ति तत्किमुच्यते ईप्सितेति । किमुच्यते च प्रकर्षेतीत्याशंक्य स्पृहधातुरिच्छामात्रवाची फलावच्छिन्नेच्छावाची च । आद्ये संप्रदानत्वमंत्ये कर्मत्व-मिति गूढाभिसंधिनाह । ईप्सितमात्रे इत्यादि प्रकर्षविवक्षायां

फलाश्रयत्वेन विवक्षायां, परत्वादिति । संप्रदानत्वस्य क्रियाजनकत्वेनाद्यर्थे चारितार्थ्येनापवादत्वाभावादिति भावः । चतुर्थीसमवधाने पुष्पसंप्रदानिका इच्छेति वोधः । द्वितीयासमवधाने पुष्पकर्मिकेति वोधः । कुमार्य इव कान्तस्य त्रस्यंति स्पृहयन्ति चेत्यादौ तु क्रियासम्बन्धिमात्रविवक्षया षष्ठी । ननु चित्तदोषरूपता सर्वेषामस्तीत्येकतरेणैव सिद्धिमाशंक्य भिन्नार्थकत्वमाह । क्रोधोऽमर्षः । वाक्चक्षुरादिविकारानुमेयः प्ररूढकोपः, अपकारः । अपकारविषयेच्छा । अक्षमा उत्कर्षविरोधिधर्मारोपानुकूलो व्यापारः । गुणेषु, गुणविषयेषु, दोषः, दोषत्वं, कोपप्रभवा इति । क्रोधादिषु कोपाव्यभिचारादिति भावः । तदुक्तं न ह्यकुपितः क्रुध्यति न चाकुपितो द्रुह्यति इत्यादि भाष्ये । अत एवाह विशेषणं सामान्येनेति । उक्तभाष्यात् प्ररूढकोप एव क्रोध इति कुपेस्तदर्थत्वाभावात्तद्योगेनापादनत्वं यस्मै कुप्यसीत्यादिकं त्वसाध्वेवेत्याहुः । पत्ये शेते इतिवत् क्रियया यमभिप्रैतीति वार्त्तिकेनोक्तप्रयोगं केचित्समर्थयंते । स्वरूपमित्यस्य यत्नान्तरेणानिर्धार्य्यत्वात्स्वरूपस्यैव ग्रहणे इष्टासिद्धिं मत्वाह । अलमिति । अलमित्यनेन पर्याप्त्यर्थग्रहणं व्याख्यानादित्यर्थः । तत्र ज्ञापकमप्याह, तस्मै प्रभवतीति । प्रभुप्रभवतिभ्यामर्थो गृह्यते न तु स्वरूपम् । अत एवोक्तं भाष्ये प्रभुर्मल्लाय प्रभवति मल्लो मल्लायेति तेन प्रभविष्यति मारणाय यज्जननीत्यादिसिद्धिः, षष्ठ्याः साधुत्वे वीजमाह । स एषां ग्रामणीति । भाष्ये आशीर्विषये षष्ठीं वाधित्वा पूर्वविप्रतिषेधेन चतुर्थी भवतीत्युक्तं तदर्थं व्याख्यातुमाह

चकार इति । आशीर्विवक्षायामिति आशीर्विषयत्वविवक्षायामित्यर्थः । परामपीति । स्वस्तियोगे चतुर्थ्या अवकाशः स्वस्ति जाल्मायेति । अत्र तत्वकथनं जाल्मत्वादाशीरभाव इति कैयटः । स्वस्तिभिन्नाः कुशलार्थास्तु षष्ठ्या अवकाशः । मन्यकर्मणीत्यत्रानभिहिताधिकारेण मन्येति न यका निर्देशस्तद्योगे कर्मण उक्तत्वेन चतुर्थ्यप्रवृत्तेरिति तादृशरूपं निश्चित्याह । श्यनेति । एतेन यका निर्देशो नास्ति व्याख्यानादित्युक्तिश्चिन्त्या श्यनू तूपलक्षणं लिङादावपि भवति तत्ध्वनयन्नाह तानादिकेति । तनादेः मवस्तन्त्र मन इति ढक् तेन तृणाय मत्वा रघुनन्दनोऽपि बाणेन रक्षः प्रधनान्निरास्यदिति भट्टिप्रयोगो व्याख्यातः तत्र मत्वेति रूपं दैवादिकस्यैव इडभावदर्शनात् चेष्टायां किमिति । गत्यर्थयोगे विभक्तिविधानेन क्रियारूपत्वेन धात्वर्थाभासादिष्ट एवेति प्रश्नः । धात्वर्थमासनेऽप्यभिमतार्थं तदित्याशयेनोत्तरयति । मनसेति । शारीरव्यापारस्यैवात्र ग्रहणादिति भावः । अत एव करचरणादिव्यापारश्चेष्टा इत्युक्तं भाष्यादौ । अनध्वनीति किमिति । एतदुक्ते कुत्र न भवतीति जिज्ञास्यते तत्र स्वरूपमिति वचनात्स्वरूपस्यैव ग्रहणे प्राप्तेऽध्वन्यर्थग्रहणं कर्तव्यमिति भाष्योक्तेः पर्यायादपि चतुर्थी न भवतीत्यभिप्रेत्य विज्ञापयति । पन्थानमिति । गत्यर्थकर्माणि चतुर्थी वेत्येवास्तु किं द्वितीयाग्रहणेन अपवादविषयेऽपि द्वितीयाविधानार्थत्वात्तद्ग्रहणस्य । तेन ग्रामं गंतेत्यत्र कृद्योगलक्षणषष्ठी न भवतीति कैयटवृत्तिकारादयः । अत्र वार्त्तिकम् । आस्थितप्रतिषेधश्चेति अत्र भूते कर्माणि क्तः आस्थितः

आक्रान्तः । तथा च क्रमणव्यापारजन्यफलाश्रयस्याध्वनः प्रतिषेध इति तदर्थस्तदाह गंत्राधिष्ठितेति । गंतृशारीरकक्रियाजन्यफलाश्रय इत्यर्थस्तेन पन्थानमित्यत्र चतुर्थी अस्या उक्तेर्व्यावृत्तिमाह यदा त्वित्यादि । उत्पथात् उत्पथं संत्यज्य ल्यप्लोपे पञ्चमी, इष्यते न तु आक्रान्तः उत्पथेन गंतुमशक्त इति शेषः । ननु स्त्रियं गच्छति अजां नयतीत्यादौ स्यादेव चतुर्थी मैवम् । अध्वपदेन गंतृप्राप्यार्थस्याभिधानात् स्त्रियाश्च प्राप्तत्वात् । पथोऽपि यत्राप्राप्तत्वं तत्र भवत्येव चतुर्थी । नयतेस्तु न गतिरर्थस्तस्य प्रापणान्वयित्वादित्यत्रैव कैयटः । ननु घटाद्भिन्न इत्यादौ पञ्चमी कथमत आह अन्येत्यर्थेति । भेदवानन्यार्थः तर्हीतरग्रहणं किमर्थमत आह प्रपञ्चार्थमिति । न च इतरस्त्वन्यनीचयोरित्यमरान्नीचार्थकस्येदं ग्रहणमिति वाच्यम् । अस्मात्तारो मन्दो वेत्यादाविव पञ्चमीविभक्तेः । इति सिद्धे । ननु इतरादिति निर्दिश्यमानप्रतियोगिक एव प्रयुज्यते तद्यथा चैत्रः शूर इतरः कातर इति । अतो नायमन्यार्थ इति चेन्न । प्रतियोग्याकांक्षाया उभयत्र तद्वदन्यः कातर इत्यास्यापि वक्तुं शक्यत्वेन तुल्यत्वात् उक्तामरकोशविरोधाच्च । अन्ये तु ध्रुवमिति सूत्रेऽपायशब्देन भेदस्यापि ग्रहणां पञ्चमीविभक्त इति सूत्रे विभागार्थकविभक्तपदेन भेदेन व्याख्यानात् अत एव घटाद्भेद इति सिद्धं तद्योगेऽप्यपादानत्वात् अन्यशब्दार्थस्याक्रियात्वात्तद्योगे एतद्विधानमत एव घटः पटो नेत्यादौ न पञ्चमी । नञो भेदवदर्थकत्वेऽपि अक्रियात्वात् अत एवेतरग्रहणं चारितार्थ्यम् । अत एव भाष्येऽर्थग्रहणं नोक्तमित्याहुः । ननु

प्रागादिपदानां दिग्वाचकत्वाव्यभिचारात्तेनैव तत्सिद्धिरित्याह । अंच्यूत्तरपदस्येति । नन्वदिगर्थसम्यक्पदयोगे पंचमीविधानाय तद्ग्रहणमिति चेन्न । दिक्शब्दसाहचर्येणांचूत्तरपदस्यापि दिग्वाचकस्यैवात्र ग्रहणात् । न च समनन्तरं दिक्शब्दस्य देशकालार्थत्वोक्तेर्दिगर्थत्वस्य व्यभिचार इति वाच्यम् । शब्दग्रहणसामर्थ्येन तादृशार्थपरत्वेऽपि स्वतो दिगर्थचारात् । बाधितुमिति । परत्वात्प्राप्तमित्यादि, परत्वेऽपि प्रतिपदविधित्वादिदमेव बाधते इति भावः । षष्ठ्यतसर्थेत्यत्र प्रत्ययग्रहणात्तस्य श्रूयमाणप्रत्यय एव प्रवृत्तिस्तदेदं न कर्तव्यमिति तु तत्त्वमिति स्पष्टं भाष्ये । नन्वासकलाद्ब्रह्मेत्यभिविधौ न स्यादत आह वचनग्रहणादिति । मर्यादायामिति वाच्ये वचनग्रहणसामर्थ्यात् अवधिमात्रं विवक्ष्यते तेन विनेति मर्यादा तेन सहेत्यभिविधिरिति वृद्धोक्तौ तेनेति विशेषणांशस्तु न विवक्षित इति भावः । यद्वा मर्यादेति शब्द उच्यतेऽस्मिन् तन्मर्यादावचनमाङ्मर्यादाभिविध्योरिति सूत्रं तत्र य आङ् दृष्टः स उक्तसंज्ञ इत्यर्थः । शेषे किमिति । दिवस्तदर्थस्येत्यादिना विच्छेदादनेनापि करणकारके एव षष्ठीविधानं युक्तमिति प्रश्नः । द्विरद्धीति वृत्त्यादिप्रामाण्यान्मंडूकानुवृत्तिराश्रयणीयेत्युत्तरम् कृति किमिति । कर्तृकर्मपदाभ्यामन्यथानुपपत्त्या क्रियाक्षिप्यते तद्वाचकश्च धातुरेव । तस्माच्च द्वये प्रत्ययास्तिङः कृतश्च तत्राद्ययोगे न लोकेति निषेधात् कृद्योग एव पर्यवसानं न च न लोकेत्यकृदव्ययस्याग्रहणार्थं तत् । तत्राव्ययार्थस्य ये कर्तृकर्मणी इति व्याख्यानेनैवेष्टसिद्धेः । न चोभयप्राप्तावित्यत्रान्यपदार्थसमर्पकं तदिति

वाच्यम् । एकाचो द्वे इत्यादौ धातुलाभवद्व्याख्यैव कृतीत्येतल्लाभात् । ननु देवस्तेन शत्योऽश्व इत्यादौ षष्ठीप्रतिषेधार्थं तदिति चेन्न । विवक्षितक्रियाया अभावेनेह षष्ठ्यप्राप्तेः । कारकान्वययोग्यभावक्रिया धातूपस्थापितैव न तु तद्धिताद्युपस्थितेति स्पष्टमत्रैव द्वितीये भाष्ये । तस्मात्कृद्योग एव पर्यवसानात्किं तेनेति प्रष्टुराकूतम् । समाधत्ते । तद्धित इति । तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयायाः क्रियायाः कर्त्तरि कर्मणि च मा भूदित्यर्थः । कृद्ग्रहणेन तु कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियायाः कर्त्तृकर्मणोः षष्ठीति सूत्रार्थः संपद्यते । ननु तण्डुलानां पाचकतर इत्यत्रापि न स्यात् मैवं पाचकादेस्तद्धितं विनापि प्रयोगात्तच्छक्तिग्रहसत्त्वेन कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयत्वस्य क्रियायाः सत्त्वात् । एतेन तद्धिताधिक्ये मा भूदित्येतदर्थं कृद्ग्रहणं तण्डुलानामित्यत्र षष्ठी त्वसाध्वीति नव्योक्तमपास्तम् । अत एव तद्धितस्य ये कर्तृकर्मणी तत्र मा भूत्कृतो ये तत्रैव यथा स्यादित्येवमर्थमित्युक्तमत्र भाष्ये न तु त्वदुक्तम् । कृतपूर्वी कटमिति । पूर्वं कृतमनेनेति विग्रहेऽविवक्षितकर्मतया भावे क्ते पूर्वादिनिः सपूर्वाच्चेतीनिस्तदनन्तरं कटरूपकर्मणोऽन्वयः अनभिहिताधिकारेऽप्युक्तरीत्या कर्मणोऽनाभिहितत्वात्षष्ठी स्यात्तद्वारणाय कृद्ग्रहणम् । इह च तद्धितान्तशक्तिग्रहणप्रयोज्योपस्थितिविषयक्रियाकर्मणस्सत्त्वेन कृदन्तशक्तिग्रहणमात्रप्रयोज्योपस्थितिविषयक्रियाकर्मणोऽभावान्न दोषः । नन्विह निष्ठान्तत्वेनैव षष्ठीनिषेधसिद्धौ कृद्ग्रहणं व्यर्थमेवेति चेन्नैतदस्ति । निष्ठान्तशक्तिज्ञानसहकारेणो-

पस्थितक्रियान्वयिनोरेव न लोकेति निषेधात् । न चाधीती व्याकरण इत्यत्रेव क्तस्येति सप्तमी स्यादिति वाच्यम् । क्तान्तप्रकृतेः कर्मणीति तदर्थादिह चातथात्वात् । कटकर्मकोत्पत्तिकर्त्तेति बोधः । सर्वोऽयमिति श्लाघादेशविषयक इत्यर्थः । कारकषष्ठ्या इति । कर्त्तृकर्मणोर्विहिताया इत्यर्थः । प्रतिषेध इति । अनन्तरस्येति न्यायादिति भावः । शेषे षष्ठी त्विति । अन्ये तु छात्रस्य हसित-मित्यत्र न लोकेति निषेधे प्राप्ते वार्तिककृतोक्तं नपुंसके भावे क्तस्य योगे षष्ठ्युपसंख्यानमिति । तत्र प्रतिपदोक्तत्वान्नपुंसके भावे क्त इति विहितः क्तो गृह्यते तेन भ्रांतं देशमिति भर्तृहरिपद्ये गत्यर्थाकर्मकेत्यनेन भावे क्ते तद्योगे षष्ठ्यप्रसक्तिः सिद्धः । तच्च शेषषष्ठ्या छात्रस्य हसितमिति प्रयोगं निर्बाध्य प्रत्याख्यातं भाष्यकृता । तथा च कारकषष्ठीनिषेधविषये शेषविवक्षा न कार्ये-त्यभिप्रायो वार्तिकस्य लभ्यते । भाष्यस्य तु क्तप्रत्ययातिरिक्त-विषयेऽनभिधानाच्छेषत्वं न विवक्षणीयमिति । तस्मान्मूलोक्तं चिन्त्यम् । ब्राह्मणस्य कुर्वन्नित्यत्र कार्यमित्यध्याहारेण नरकस्य जिष्णुरित्यत्र जातमित्यध्याहारेण तद्योगे षष्ठी साधुरिति वदन्ति । वर्तरीति किमिति । कर्तृकर्मणोरिति नित्ये प्राप्ते वैकल्पिकोऽय-

योगाऽवयव इत्यर्थः । उभयप्राप्तिना कृत्येन योगे षष्ठी नेति सूत्रार्थः । व्रजामिति । न च गुणकर्मणि वेष्यत इति विकल्पोऽस्त्विति वाच्यम् । कृत्यातिरिक्ते चरितार्थस्य विकल्पस्य दोग्धव्या गावः पयः कृष्णेनेत्यादौ गुणकर्मण उक्तत्वात्प्रधाने चरितार्थेनानेन परत्वाद्बाधनादुक्तोऽर्थ इति । यथान्यासिक इत्यर्थः ॥

इत्युपाध्यायोपनामकेन्द्रदत्तविरचिते फक्किकाप्रकाशे
विभक्त्यर्थाः । ११।६।१६

---



पुस्तक मिलनेका ठिकाना—गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" छापाखाना, कल्याण—मुम्बई.

दूसरा पता—खेमराज श्रीकृष्णदास,
श्रीवेङ्कटेश्वर स्टीम् प्रेस—मुम्बई.

पस्थितक्रियान्वयिनोरेव न लोकेति निषेधात् । न चाधीती व्याकरण इत्यत्रेव क्तस्येति सप्तमी स्यादिति वाच्यम् । क्तान्तप्रकृतेः कर्मणीति तदर्थादिह चातथात्वात् । कटकर्मकोत्पत्तिकर्त्तेति बोधः । सर्वोऽयमिति श्लाघादेशविषयक इत्यर्थः । कारकषष्ठ्या इति । कर्तृकर्मणोर्विहिताया इत्यर्थः । प्रतिषेध इति । अनन्तरस्येति न्यायादिति भावः । शेषे षष्ठी त्विति । अन्ये तु छात्रस्य हसित-मित्यत्र न लोकेति निषेधे प्राप्ते वार्तिककृतोक्तं नपुंसके भावे क्तस्य योगे षष्ठ्युपसंख्यानमिति । तत्र प्रतिपदोक्तत्वान्नपुंसके भावे क्त इति विहितः क्तो गृह्यते तेन भ्रान्तं देशमिति भर्तृहरिपद्ये गत्यर्थाकर्मकेत्यनेन भावे क्ते तद्योगे षष्ठ्यभावसिद्धः । तच्च शेषषष्ठ्या छात्रस्य हसितमिति प्रयोगं निर्वाह्य प्रत्याख्यातं भाष्यकृता । तथा च कारकषष्ठीनिषेधविषये शेषविवक्षा न कार्ये-त्यभिप्रायो वार्तिकस्य लभ्यते । भाष्यस्य तु क्तप्रत्ययातिरिक्त-विषयेऽनभिधानाच्छेषत्वं न विवक्षणीयमिति । तस्मान्मूलोक्तं चिन्त्यम् । ब्राह्मणस्य कुर्वन्नित्यत्र कार्यमित्यध्याहारेण नरकस्य जिष्णुरित्यत्र जातमित्यध्याहारेण तद्योगे षष्ठी साधुरिति वदन्ति । कर्तरीति किमिति । कर्तृकर्मणोरिति नित्ये प्राप्ते वैकल्पिकोऽय-मारम्भः । तत्रैतदभावे कर्मण्यपि विकल्पस्तु न भविष्यति प्रायो भावकर्मणोः कृत्यानां विधानेन कर्मण उक्तत्वादनभिहिताधि-कारात् कर्तर्येव भविष्यतीति प्रश्नः । सिद्धान्ती तु लक्षणं स्वविषयी-भूतसर्वलक्ष्यसाधकमित्यभिप्रयन्नाह साम्नामिति । एवं च कर्मा-ननुवृत्तिफलकं कर्तृग्रहणम् । अतिव्याप्तिं मत्वाह अत्र योग इति ।

योगाऽवयव इत्यर्थः । उभयप्राप्तिना कृत्येन योगे षष्ठी नेति सूत्रार्थः । व्रजामिति । न च गुणकर्मणि वेष्यत इति विकल्पोऽस्त्विति वाच्यम् । कृत्यातिरिक्ते चरितार्थस्य विकलपस्य दोग्धव्या गावः पयः कृष्णेनेत्यादौ गुणकर्मण उक्तत्वात्प्रधाने चरितार्थेनानेन परत्वाद्बाधनादुक्तोऽर्थ इति । यथान्यासिक इत्यर्थः ॥

इत्युपाध्यायोपनामकेन्द्रदत्तविरचिते फक्किकाप्रकाशे
विभक्त्यर्थाः ।

---



पुस्तक मिलनेका ठिकाना–गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" छापाखाना, कल्याण–मुम्बई.

दूसरा पता–खेमराज श्रीकृष्णदास,
श्रीवेङ्कटेश्वर स्टीम् प्रेस–मुम्बई.

श्रीमत्समरसिंहविरचित

# मनुष्यजातक।

## संस्कृत टीका और उदाहरणों समेत।

यह ग्रन्थ श्रीमत्समरसिंहने अनेक ताजिक ग्रन्थोंका सार भाग ग्रहण कर बनाया है. इसके बीस अधिकार हैं. पहले अधिकारमें-राशियोंके अंग, सूर्यादिग्रहोंके उच्चादि, हद्दाधिपनिर्णय, नवांशद्रेष्काणेश निर्णय, त्रैराशिकनिर्णय, दृक्काणपनिर्णय, त्रिराशिपति, लग्नसे चतुर्दिग्भागनिर्णय, अंधांशनिर्णय तथा सूर्यादि ग्रहोंके हर्षस्थानोंका वर्णन है. दूसरे अधिकारमें-ग्रहोंके वर्ण वय आदिका वर्णन है. तीसरे अधिकारमें-इक्कबालादि सोलह योगोंका वर्णन है. चौथे अधिकारमें-पुण्य आदि बत्तीस सहमोंका वर्णन है. पाचवें अधिकारमें-लग्नशुद्धि होरासाधनादिका वर्णन है. छठे अधिकारमें-आयुःपरीक्षण आदि तथा जन्मकालीन मृत्युयोग आदि योगोंका वर्णन है. सातवें अधिकारमें-आयुःप्रद आदि योगोंका वर्णन है. आठवें अधिकारमें-उत्पन्न हुए बालकके वर्ण आकृति आदिका वर्णन है. नवें अधिकारमें-हिल्लाज निर्णय आदि तथा अनेक योगोंका वर्णन है. दशम अधिकारमें-अहर्गणसाधनप्रकार तथा बुधदशा आदिका वर्णन है. ग्यारहवें अधिकारमें-अहर्गणानुमानसे सूर्यादि ग्रहोंकी स्थिति और उससे उत्पन्न हुए रोगोंका वर्णन है. बारहवें अधिकारसे बीसवें अधि-अधिकारतक नाना प्रकारके शरीरयोग तथा अन्यान्य कतिपय योगोंका वर्णन है. टीकाकारने इसकी टीकाभी विशेष बुद्धिमत्तासे की है और अंतमें बहुतसे उदाहरणभी दिखाये गये हैं. की. १ रु०

महामहोपाध्यायश्रीमदमृतनाथविरचित

# कृत्यसारसमुच्चय।

इस पुस्तकमें चैत्र आदि बारह महीनोंमें जो जो कृत्य किये जाते हैं उनका विस्तृत वर्णन किया है. पहले चैत्रकृत्य अर्थात् वारुण्यादिनिर्णय, प्रतिपद्देवीपूजा, लौहितास्नान, रामनवमी, वैशाखमें त्याज्योंका वर्णन तथा अक्षयतृतीया, ज्येष्ठमें दशहरा, आषाढकृत्य, श्रावणकृत्य, नागपंचमी, रक्षाबंधन, बहुलापूजा, जन्माष्टमी, महालक्ष्मीपूजा, कुशोत्पाटन, हरितालिका, भाद्रपद-शुक्लचतुर्थी, सूर्यषष्ठी, दूर्गाष्टमी, अनंतव्रत, अगस्त्यर्घदान, शस्त्रादिहतश्राद्ध, महालक्ष्मीपूजन, जीवत्पुत्रिकाष्टमी, गजच्छाया, श्राद्धकाल, खंजनदर्शन, चंडीपाठ, सप्तमीनिर्णय, महाष्टमीनिर्णय, अपराजितापूजा, यात्राविजयदशमी, शमीग्रहण, कोजागरी, हवि-ष्यविचार, आमिषविचार, अमावास्यादिकृत्य, उल्काभ्रमण, दीपदान, यमद्वितीया, चित्रगुप्तपूजा, एकादशीनिर्णय, हरिवासर, नवान्नभक्षण, अर्धोदय, कौशिकीस्नान, गणेशचतुर्थी, श्रीपंचमी, भीष्माष्टमी, सीतोत्पत्ति, शिवरात्रि, नक्तव्रत, गोविंदद्वादशी, होलिका आदि सब कृत्योंका वर्णन किया है. फिर ग्रहणविचार तथा संक्षेपसे सब आह्निककाभी वर्णन किया है. फिर सतीविधान, विधवास्त्रीधर्म सब प्रकारके अशौच आदिका वर्णन, त्रिविध क्रिया, वृषोत्सर्गादिदान, संस्कार, तीर्थश्राद्ध, गयाविधि, काशीवासफल आदि कतिपय विषयोंका वर्णन भली भांति किया है. यह ग्रन्थ संस्कृत है. कीमत १२ आना.